॥ श्रीः ॥

संस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़्पुस्तकमालायाः

१९

व्याकरणविभागे (२) द्वितीयं पुष्पम् ।

* श्रीः *

# लघुजूटिका ।

अर्थात्

अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः

Printed-Published and sold by
JAI KRISHNA DASS GUPTA,
At the Vidya Vilas Press,
Gopal Mandir Lane,
Benares City.

1924.

1. The maximum time allowed for retention of a book shall be one fortnight. It may be borrowed again if not required by others.

2. No reference books shall be lent out.

3. No borrower shall have more than two volumes out of the Library at one time.

4. Borrowers must not pass books from one to another but must return them to the Librarian.

5. Library books must not be used as class-books.

6. Any one who defaces by writing or otherwise damages any book shall pay the full cost of the book or of the entire works, if it consists of more than one volume.

7. The borrower shall be responsible for the value of the books lent out to him if they are lost, damaged or otherwise cannot be returned to the Library when they are due or recalled.

8. The presence of the voucher with the Librarian shall be considered sufficient proof of the non-return of books.



1615-36 The Bangalore Press

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरीज़्पुस्तकमालायाः
१९
व्याकरणविभागे (२) द्वितीयं पुष्पम् ।



॥ श्रीः ॥

# लघुजूटिका ।

अर्थात्

## अभिनवा परिभाषेन्दुशेखरपरिष्कृतिनिर्मितिः

छातावास्तव्यमहोपाध्याय-
सर्वतन्त्रस्वतन्त्र श्री ६ मत्काशीनाथशास्त्रितनुजन्मव्याकरणाचार्य-
पण्डितवर श्री ६ मद्रघुनाथशास्त्रिरचिता ।

साच

स्रुघ्नोपघ्नाभिजनश्रीहरिदत्तशास्त्रिभिः संपादिता
श्रीफडके इत्युपाह्वानन्तशास्त्रिभिः संशोधिता ।

इयं

वाराणस्याम्
चौखम्बासंस्कृतपुस्तकालयस्वामिना श्रेष्ठिकुलभूषण-
हरिदासगुप्तात्मजेन जयकृष्णदासगुप्तमहो-
दयेन विद्याविलासनाम्नि यन्त्रालये
मुद्रयित्वा प्रकाशिता ।

१९८१

हर तरह के संस्कृत ग्रन्थ तथा भाषा भाष्य पुस्तकों के मिलने का पता—

# जयकृष्णदास—हरिदासगुप्तः

**चौखम्बासंस्कृतसीरीज आफीस,**

**विद्याविलास प्रेस, गोपालमंदीरलेन,**

**बनारस सिटी।**

KASHI-SANSKRIT-SERIES;

( HARIDAS SANSKRIT GRANTHAMÂLÂ. )

19

Vyakaran Section No. 2.

# LAGHUJUTIKA

A critical notes on Paribhashendu Sekhare

BY

Pandit Raghunath Sastry Vyakaranacharya

Son of PANDIT SRI KASHINATH SASTRY

Edited by

ANANTA SASTRY PHEDAKE.

*BENARES*

Printed-Published & sold by

JAI KRISHNA DAS GUPTA,

The Chowkhamba Sanskrit Series Office,

VIDYA VILAS PRESS

Gopal-Mandir-Lane.

1924

Printed-Published and sold by

JAI KRISHNA DASS GUPTA,

At the Vidya Vilas Press,

Gopal Mandir Lane, Benares City.

# किमपि ।

श्रीमन्मात्रे नमः ।

अथेदं विदितमस्तु—निखिलशास्त्रपारदृश्वभ्यो विपश्चिदपश्चिमेभ्यश्छात्रेभ्यश्च । यदियं शम्भोर्जूटिकेवाक्षरबन्धाऽस्खलितपदा च, "जूटिका" श्रीमतां लोचनातिथी-भवति । इयं खलु परिभाषेन्दुशेखरस्योपयुक्ततमपरिष्कारांशान् दर्शयन्ती-आमूलचूलं सम्यग्घुष्टेव परीक्षामहोदधेः परं पारं नयन्ती कस्य नेत्रयोः प्रीतिजननी जननीव न स्यात् । अस्याश्च प्रणेतारोऽस्माकं गुरवो जगदुल्लसत्समञ्ज—सर्वतन्त्रा-परतन्त्रप्रज्ञतत्रभवदस्मत्परमगुरुश्री० श्री० ६ मत्काशीनाथशास्त्रिणां देशिकवर्याणामात्मजाः श्री ६ मद्रघुनाथशास्त्रिणो व्याकरणाचार्याः सन्ति । व्याकरणाचार्यद्वितीयखण्डदित्सूनाश्चेयं सविशेषमुपकरिष्यति । यदि च हृदयदारिशाम्पमात्ययिकं समाचारमाकलयतो मम दृष्टिदोषाः संजाताः स्युस्तर्हि पाठकमहाभागास्तान् संशोध्याधीयतामित्यर्थयमानो "नहि कस्तूरिकामोद" इत्युक्तिश्च स्मृतिपथाध्वनीनां कुर्वन् प्रसाधनेनाग्रिममुद्रणावसरे प्रसाधयितुं विधित्सुश्च-जोषमुपैति—

विद्वज्जनकृपाभाजनम्—

ता० ४-४-२४. | स्रुघ्नोपघ्नाभिजनो-हरिदत्तशास्त्री
कालिकाप्रतोली
वाराणसी.
सम्प्रति महाविद्यालयज्वालापुरस्थः ।

॥ श्रीः ॥

श्रीगणेशाय नमः ।

# * अथ लघुजूटिका *

शिवं दुर्गां गणेशादीन्(१) विधातॄन् सर्वसम्पदाम् ।
विष्णुमार्तण्डसाहित्यभाजो नत्वा ग्रहानपि ॥ १ ॥
काशीनाथसुतेनेयं हरिनाथानुजन्मना ।
सौभद्ररघुनाथेन क्रियते लघुजूटिका ॥ २ ॥

## (२)परिभाषात्वम् ।

विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वाप्रकारकशक्यविषयकबोधजनकत्वे सति अधिकारशास्त्रभिन्नत्वं परिभाषात्वम् । अधिकारशास्त्रस्याप्यन्ततः साधुत्वप्रकारकबोधजनकत्वमेव ॥ इति ।

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति ॥ १ ॥**

सन्देहादित्यस्य तात्पर्य्यसन्देहादित्यर्थः । यद्यप्येकस्मिन्नपि नानातात्पर्य्यसम्भवस्तथापि ऋषीणामिच्छाप्रतीघाताभावात्तदीयेच्छा फलवत्येव भवितुमर्हति ।

बोधद्वयश्च सकृदुच्चरिताण्पदान्न सम्भवति सकृदुच्चरितन्यायादावृत्तौ प्रमाणाभावाच्च । तस्मान्न पाणिनिसमवेतोभयविधतात्पर्य्यविषयतापन्नमिदमण्पदमितिनिश्चयेनैकस्यैव सत्वेनेदन्तात्पर्य्यमुतापरमिति सन्देह उपपद्यते । अनिर्णय इत्यस्य निश्चयात्मकशाब्दबो-

---

(१) स्कन्द ( तिलकस्वामि ) विष्वक्सेनादिरादिपदार्थः ।

(२) "सामान्यतो ज्ञातं हि विशेषतो जिज्ञास्यते" इति न्यायादादौ परिभाषात्वनिरुक्तिं कुर्वन्त्यस्मद्गुरुचरणाः परीत्यादिना ।

ज्ञाभाव इत्यर्थः। निर्णयात्मकशाब्दबोधाभावो वा ऽर्थः। ज्ञापिताया-मध्यस्यां कथं तस्य स्वांशे चारितार्थ्यमिति शङ्का तु न। अस्या हि ज्ञाप्यमस्तु ज्ञापकं मास्तु इत्याकारः। पूर्वणकाररूपज्ञापकाकरणे हि अ-इ-उ-मात्रबोधानापत्तिः। खकाराद्यनुबन्धं कृत्वा तावन्मात्रबोधस्य अख्-इख्पदेनोपपादनेपि लाघवानवकाशः। तथा सति सन्देहाभावः इति चेत्, णकारकरणेप्युक्तज्ञाप्यात्सन्देहाभावसिद्धेः।

किञ्चानुपपत्त्योपपादकं कल्पितं. तेनानुपपत्तिशान्तिरिति किमतोऽधिकं वक्तव्यम्। व्याख्यानातिरिक्तेत्यत्र नञर्थकपदद्वयोपादानेन विरोधस्थले व्याख्यानादेव सन्देहनिवृत्तिः कर्तव्येति सूचितम्। तेन "हृदयस्य" (पा० सू० ६।३।५०) इति सूत्रे लेखग्रहणात् भाष्यकृद्व्याख्यानेन "उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तस्य ग्रहणम्" इतिपरिभाषैव ज्ञाप्यते॥ इति॥ १॥

## यथोद्देशं संज्ञापरिभाषम्॥२॥

## कार्य्यकालं संज्ञापरिभाषम्॥ ३॥

प्राचीनमते यथोद्देशपक्षे वाक्यैकवाक्यता, परिभाषया संज्ञासूत्रेण च विधिशास्त्रस्य। तल्लक्षणन्तु उपजीव्योपजीवकभावापन्नबोधजनकत्वम्। कार्य्यकालपक्षे तु पदैकवाक्यता परिभाषया संज्ञासूत्रेण च विधिशास्त्रस्य। पदैकवाक्यत्वन्तु निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वम्।

नागेशमते तु यथोद्देशपक्षे कार्य्यकालपक्षे च पदैकवाक्यतैव निरुक्तरूपा। कार्य्यकालपक्षे त्रिपादीस्थविधिशास्त्रैः परिभाषाया आकर्षणन्तु–अदृष्टपिशाचन्यायेन।

*संज्ञाशास्त्रस्यत्वित्यादि*। अत्र बीजन्तु यथा परिभाषाणां स्वोद्देश्यकज्ञानाय विधिशास्त्रस्यापेक्षणात् ताभिस्तेषामाकर्षणम्। तथा संज्ञाशास्त्रस्य न। सङ्केतकाले सांकेतिकपदेन व्यवहर्तुरनपेक्षणादिति न तेन तस्याकर्षणम्। तस्मिन् शक्तिग्रहेऽपेक्षाबुद्धौ यथोद्देशपक्षः, उपेक्षाबुद्धौ च कार्य्यकालपक्षः।

शास्त्रिचरणास्तु, न कार्य्यकालपक्षो न यथोद्देशपक्षः, किन्तु परिभाषाणां संज्ञानाञ्चोच्चराणाधिकरणदेश एव परत्वादिनियामकः। परिभाषा च द्विविधाऽस्ति। कयाचित् शा-

स्त्वं क्रियते । कस्याश्चिदुद्देश्यतावच्छेदकं शास्त्रत्वम् । आद्या त-स्मिन्नित्यादिः । द्वितीया च, असिद्धं बहिरङ्गमित्यादिः । आद्यायास्तु-त्रिपाद्यामपि प्रवृत्तिस्तत्प्रवृत्तिं विना शास्त्रत्वस्यैवाभावेन पूर्वत्रासि-द्धमित्यस्याप्रवृत्तेः । द्वितीयस्यास्तु न तत्र प्रवृत्तिः पूर्वत्रासिद्धत्वात् । संज्ञाशास्त्रदृष्ट्या संज्ञाघटितशास्त्राणामासिद्धत्वेपि जातशक्तिग्रहेणै-व निर्वाह इतिवदन्ति । एकदेशविकृतन्यायावतरणे पदसंज्ञायाः कार्य्यकालत्वोक्तिस्तु-अत्र भसंज्ञासाहचर्य्येण परनिमित्तपदसंज्ञाया एव ग्रहणाभिप्रायेण, प्राचीनमतेन वेति ॥ २ ॥ ३ ॥

## अनुबन्धा अनेकान्ताः ॥ ४ ॥

इत्संज्ञका अनुबन्धाः=अनुबन्धपदवाच्याः प्राचीनमते साध्यसंदे-हरूपपक्षता, तां दर्शयति *अवयवानवयवत्वसन्देह इति*। न्यायप्रयोग-स्तु, अनुबन्धा अनेकान्ताः, स्वघटितपदाघटितविभक्त्यघटितपदघट-कयावद्वर्णघटितानुबन्धाघटितसमुदायपर्य्याप्तश्रावणप्रत्यक्षविषयताव-च्छेदकधर्म्माश्रयनिष्ठविषयताप्रयोजकानवयवाः, स्वघटितघटकबोध्य-तावच्छेदकधर्म्मवत्वं, स्वघटितघटकबोधकावयवत्वेन निश्चितोत्तरत्व-विशिष्टं बोधकावयवत्वेनानिश्चितं यत्तदनुत्तरत्वमित्युभयसम्बन्धा-वच्छिन्नप्रतियोगिताकस्वाभावात् । यन्नैवं, तन्नैवम् । यथा सन् सकारः ।

समन्वयस्तु, सनि स्वं सकारः, तद्घटितःसन्निति, तद्घटकबोध्यता-वच्छेदकं सत्वं, तस्य स्वघटितघटकबोधकावयवत्वेन निश्चितः स इति, तदुत्तरं बोधकावयवत्वेनानिश्चितो नकारः, तदनुत्तरत्वस्य च सशब्दे स-त्वान्नोभयाभावरूपो हेतुस्तत्र । नकारे चोत्तरसम्बन्धसत्वेप्याद्यसम्ब-न्धाभावान्नोभयाभावः । अनुबन्धा अनेकान्ता इति प्रतिज्ञा । योह्यवयव इत्याद्युदाहरणम् । तदर्थभूतेत्यादिर्हेतुः । यत् स्वघटितघटकबोधका-नवयवत्वाभाववत्, तत् स्वघटितघटकबोध्यानवयवत्वाभाववत्, इति व्यतिरेकव्याप्तिरत्र बोद्ध्या । *व्याख्यानतोनिर्णयमिति*। दृष्टचक्ष-कारवैयर्थ्यापत्तिमूलकादित्यर्थः ॥

आनङ्बोद्ध्ये नकारस्य गणबोध्येऽकारस्य च लोपात्कदाप्यदर्श-नेन बोद्ध्यपर्य्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकाऽऽत्वगणत्वादेर्बोध-कावयवे नकारेऽकारे चाभावेन पूर्वोक्तहेतोर्व्यभिचारात् "एकान्ता" इतिपक्षादरः ॥ ४ ॥

## एकान्ताः ॥ ५ ॥

शास्त्रे एकान्ता इत्यस्य बोधकेऽवयवा न तु बोद्ध्ये इत्यर्थः । तथाचानुबन्धाः स्वघटितघटकबोधकावयवाः, बोधके उपलम्भादन्यत्रानुपलम्भाच्चेति फलति । यो य एकजातीयसम्बन्धेन यत्रोपलब्धः सन् अन्यत्र नोपलभ्यते स स तस्यावयव इतिसामान्यव्याप्त्या प्रकृतेऽनुमितिर्न विशेषव्याप्त्या । आकाशे व्यभिचारवारणाय हेतावाद्यदलम् । यो घटश्चक्रे उत्पन्नो नष्टश्च तस्याप्यन्यत्रानुपलब्धिसत्वात्, तत्र व्यभिचारवारणाय योग्यत्वनिवेशः ।

व्यतिरेकव्याप्तिमाह *अनवयवो हीत्यादिना* । अनेकान्तपक्षे सानुबन्धकस्योद्देश्यत्वस्थले सर्वत्र लक्षणाश्रयणे गौरवं, समीपेऽवयवत्वारोपश्च, व्यभिचाररूपो दोषस्तु पूर्वमुक्त एव । नचैकान्तपक्षेऽपि परिभाषात्रयकरणरूपं गौरवं । शिद्ग्रहणेनानुबन्धानामल्पद्बोद्ध्यत्वाभावबोधनेनैव परिभाषात्रयस्यापि गतार्थत्वात् ॥ ५ ॥

## नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

नन्वेकान्तत्वकल्पेपि बोद्ध्यानवयवत्वस्यैवानुबन्धानां स्वसिद्धान्ततया, आदिश्यत इत्यादेश इतिव्युत्पत्त्या बोद्ध्यस्यैवादेशत्वेन तस्य चानेकाल्त्वाभावेन "अनेकाल्शित्सर्वस्य" ( पा० सू० १ । १ । ५५ ) इति सूत्रस्यौशादेशस्थलेऽप्रवृत्त्या कथं शिद्ग्रहणं व्यर्थमितिचेत् । इदमत्रावधेयम् । स्वरूपबोधकस्थले स एवायमितितत्त्वप्रत्यभिज्ञया बोद्ध्यबोधकयोरभेद इत्युपेयते । तथा च स एवायमौकारादेशो यो बोधके औशित्याकारक आसीत् इतिप्रतीत्याऽनेकाल्त्वमप्यस्यैव धर्म्म इत्यस्यावश्यमेव मन्तव्यतया भवत्यनेकालधर्म्मवान् आदेश इति स्यात्सर्वादेशः ।

नन्वेतस्या ज्ञापने न किमपि फलम् । शिद्ग्रहणमपि व्यर्थमेव, औशादावनेकाल्त्वात् सिद्धिः । अर्वन्तावित्यादौ च ङित्करणेन सिद्धिरितिचेन्न । शिद्ग्रहणेनानुबन्धानामल्पद्बोद्ध्यत्वाभावो बोद्ध्यते । एतल्लभ्यमेवानुबन्धकार्य्येऽनल्विधावितिनिषेधो न प्रवर्तते इति । एतल्लभ्यमेव च "नानुबन्धकृतमनेकाल्त्वमिति" "नानुबन्धकृतमनेजन्तत्वमिति" "नानुबन्धकृतमसारूप्यमिति" । *ङादिविषयेत्विति* । परिभाषायामनुबन्धपदेनानुबन्धयोग्यस्य ग्रहणमिति स्वमते

डा आ इत्याकारकतामभ्युपेत्य सर्वादेशत्वमुपपाद्यम्। मूलग्रन्थस्तु प्राचीनमताभिप्रायेणेति ॥ ६ ॥

## नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

ननु पकारेत्संज्ञकत्वे सति दात्वमेव दाप्त्वं। तच्च पकारेत्संज्ञकत्वस्य स्थानिवत्वेन, आत्वे कृते स्वतो दात्वस्य च सत्वेन, सुलभमेव इति नेदमवतरणं सङ्गतमितिचेत् अत्रेदमवधेयम्। दाप्त्वमानुपूर्वीरूपमेव,तदेव दाप्पदशक्यतावच्छेदकं, स्वरूपसूत्रसहकारात्। पकारेत्संज्ञकत्वे सति दात्वरूपस्य दाप्त्वस्य लक्षणां विना बोध्यतानवच्छेदकत्वात्। लक्षणायां च प्रमाणाभावात्। "आदेच" (पा० सू० ६।१।१५) इत्यात्वं तु बोधक एव। बोध्येऽपि शित्परत्वाभावे, बोद्ध्यबोधकयोरभेदान्निषेधोपपत्तिरिति ॥ ७ ॥

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

ननु बोधकावस्थायामसरूपत्वविवक्षणे व्यावर्त्यालाभेनासरूपग्रहणवैयर्थ्यापत्त्या, परिभाषाऽकरणलाघवेन च, प्रायोगिकासरूपत्वस्यैव ग्रहणेन न दोषः, इति तद्व्यर्थमितिचेन्न। वाक्यार्थबोधकाले लक्षणैकचक्षुषां प्रायोगिकरूपज्ञानाभावेनौपदेशिकरूपग्रहणस्यैवावश्यकत्वात्।

नच वैयर्थ्यम्। इगुपधलक्षणस्य कप्रत्ययस्य, "तुन्दशोकयोः" (पा० सू० ३।२।५) इतिविहितेन केन वैकल्पिकबाधाभावाय तत्सार्थक्यात् (१)। स्वविशिष्टत्वं स्वसरूपत्वम्। वै० स्वघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मवद्घटितत्व-स्वघटकावृत्ति-अनुबन्धावृत्ति-तादृशधर्म्मवदघटितत्वोभयसम्बन्धेनेति ॥ ८ ॥

## उभयगतिरिह भवति ॥ ९ ॥

*अभिधानियामकत्वादिति*। अत्राभिधा तात्पर्यमुच्यते। तस्याः शक्यतावच्छेदकमात्रनियम्यत्वात्। *नहिकृत्रिमेति* । ननु कृत्रिमात्यन्ता संख्या कतीति वर्तत इतिचेन्न। अर्थवद्ग्रहणपरिभाषयैव तन्निवारणसंभवात्। नच द्विदशशब्दात्तिप्रत्ययविंशादेशेन, शतिप्रत्ययविंशादेशेन वा विंशतिशब्दसिद्धौ फलभेदादर्थवद्ग्रहणपरिभाषानुपस्थित्या कतिव्यावृत्त्यर्थमर्थवद्ग्रहणमस्त्विति वाच्यम्। (२)अत एव

---

(१) तत्फलञ्च "उपपदम्" (पा० सू० २।२।१९) इति नित्यसमास इति।

(२) इष्टापत्तेराह-अत एवेति।

शदन्तग्रहणस्यानुसरणमितिबोध्यम् ॥ ९ ॥

**कार्य्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥**

नन्वध्येताशयितेत्यादौ गुणनिषेधापादनमयुक्तं, शास्त्रे निमित्तपदेन सप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयस्यैव व्यवहृतत्वाद् इतिचेन्न, परिभाषाऽभावदशायां निमित्तपदेन कारणमात्रमभिधीयत इत्यदोषात् । कुङ्धातोः प्रकृतिगतङित्त्वमादाय ङित्वप्रयुक्तकार्यसिद्धौ, कुटादौ पाठात् प्रकृतिगतङित्त्वमादाय गुणनिषेधो न प्रवर्तते इतिकल्पनया अध्येतेत्यादौ दोषाभावोपपादने तु, स्मृत्यर्थक-इको धातोरध्येतीत्युदाहरणं बोध्यम् ।

यदि तूक्तज्ञापकादिना प्रकृतिभिन्नस्यैव ङितो ग्रहणेन तत्साहचर्य्याच्च कितो गितश्च तथाभूतस्यैव ग्रहणमिति कल्पनं तदा अध्येतीत्यपि नावतरणम् । कार्य्यमनुभवन्नित्यस्य कार्य्यीयसाक्षादुदेश्यताश्रय इत्यर्थः । कार्य्यीत्यस्य उद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रय इत्यर्थः ।

स्वविशिष्टः स्वस्य निमित्तं नेत्यर्थः । स्वं कार्य्यम् । वै० च स्वीयसाक्षादुदेश्यताविशिष्टत्वसम्बन्धेन । (आद्य) सम्बन्धघटकं वै० स्वाश्रयत्व-स्वाश्रयघटितत्वान्यतरसम्बन्धेन । द्वितीयवैशिष्टयघटकाद्यसम्बन्धस्य फलमध्येता । द्वितीयस्य तु शयितेति बोद्धयम् । *द्विर्वचनेऽचीतिसूत्रभाष्ये ध्वनितैषेति*।

तत्र हि-अचि किम् ? जेघ्रीयते देध्मीयते इत्युक्तम् । घ्राय् ध्माय् इति दशायां "द्विर्वचनेऽचि" ( पा० सू० १ । १ । ५९ ) इतिसूत्रेऽज्ग्रहणाभावे द्वित्त्वनिमित्तको‌ऽजादेशो न भवतीति वाक्यार्थः । द्वित्वनिमित्तं यङ्-प्रत्ययः, तन्निमित्तकोऽजादेशः "ई घ्राध्मोः" ( पा० सू० ७ । ४ । ३१ ) इतिविहित ईकारस्तस्य निषेधे, प्रथमं घ्राशब्दस्यैव द्वित्वेऽभ्यासे एकार श्रवणानापत्तिः । अज्ग्रहणे तु द्वित्वनिमित्तस्य यङोऽच्त्वाभावात् द्विर्वचनेऽचीत्यस्याप्रवृत्तावीत्वे द्वित्वे च रूपं सिद्ध्यतीतिभावः ।

परिभाषाध्वननप्रकारस्तु—परिभाषाया अभावेऽज्ग्रहणेप्यत्र दोषसत्त्वेनाज्ग्रहणप्रयोजनकथनासङ्गत्या परिभाषायाः सत्त्वं प्रतीयते । तथाहि-परिभाषाया अभावे उद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयतामात्रस्य निमित्ततापदेन ग्रहणात्, यङ्न्ते तदा-

दित्वावच्छिन्नविषयतारूपनिमित्ततायाः आपर्य्याप्तायाः अपर्य्याप्त्या आ-आकारे सत्त्वम् । ईआद्यमोरित्यत्रालोऽन्त्यपरिभाषोपस्थितावत्त्याल्-त्वावच्छिन्नविषयतायाश्च पर्याप्त्यैवाकारे सत्त्वेन द्वित्वनिमित्तताश्रय आकारस्तत्पर्य्याप्तालत्वावच्छिन्ना निमित्तता, तादृशनिमित्ततानिरूप-कमीत्वं न स्यादिति, नाज्ग्रहणस्य फलवत्त्वमिति भाष्यासङ्गतिः स्पष्टैव । सत्यां त्वस्यां आशब्दस्य कार्य्यानुभवकर्तृत्वविशिष्टकार्य्यितया नि-मित्तत्वाभावेनाऽऽकारेऽपर्य्याप्त्यापि द्वित्वनिमित्ततायाः अभावादज्ग्र-हणे न दोषः । अज्ग्रहणाभावे तु दोष उपपादित एवेत्यलम् ॥ १० ॥

## यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

ननु दाब्घटकदाशब्दस्य दारूपत्वेन, तस्यैव घुत्वेन णत्वम-स्त्विति चेन्न । सूत्रे दाधेति विशिष्टरूपोपादानसत्त्वेनार्थवत्परिभाषो-पस्थित्या ऽर्थवतोरेव दाधोर्ग्रहणेन दाब्घटकदारूपस्यानर्थकत्वेन त-स्य घुत्वाप्राप्तिः । आगमसमभिव्याहारे आगमाविशिष्टस्यैवार्थवत्त्व-मिति न्यायात् । अत्र किम्प्रमाणमिति चेत् "प्रणिदापयति प्रणि-धापयतीत्यत्रापि नैतौ दाधावर्थवन्तौ ? किन्तर्हि ? दाप्धापौ" इतिभा-ष्यस्यैव मानत्वात् ।

नन्वेवमप्यनैमित्तिकत्वेनान्तरङ्गघुसञ्ज्ञां प्रति बहिरङ्गस्य पुको-ऽसिद्धत्वात् अर्थवतो दाशब्दस्यैव दर्शनेन णत्वप्रवृत्तावतरणासङ्ग-तिरिति । अथवा यथोद्देशपक्षे पूर्वप्रवृत्तघुत्वमादाय णत्वोपप-त्तिः। "पूर्वं धातुरुपसर्गेण" इति न्यायेन वा तदुपपत्तिः । णेःपुटो वि-धानेन वा सिद्धिरितिचेन्न । संज्ञाशास्त्राणां विधिनिमित्तनिमित्तक-त्वेन घुसंज्ञाया बहिरङ्गतरत्वात् । यथोद्देशपक्षेणापि न निर्वाहः । "यत्र क्रियायुक्ताः प्रादय" इतिन्यायात् "पूर्वं धातुः साधनेन युज्यत" इत्यस्यैव न्याय्यत्वात् । पुटो विधानेपि 'अदीदपत्' इत्यादौ ह्रस्वानापत्तेः ।

यस्यागमा इति विग्रहः । उद्देश्यत्वं षष्ठ्यर्थः । आगमत्वञ्चाव-यवत्वावच्छिन्नविधेयताश्रयत्वं । यन्निष्ठोद्देश्यतानिरूपितावयवत्वाव-च्छिन्नविधेयताश्रय इति यदागमपदार्थः । *तद्गुणीभूता इति* तद्वि-शिष्टा इतिशेषः । यत इति अत इति च पदद्वयमभ्याहर्तव्यम् ।

परिभाषार्थस्तु-यतो यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नवि-धेयताश्रयाः । अतस्तन्निरूपितावयवत्वप्रकारकाहार्यज्ञाननिरूपितवि-षयताश्रयाः । यतस्तथाभूता, अतस्तद्विशिष्टास्तन्निरूपितविषयिताव-

दूबोधानिष्ठजन्यतानिरूपितजनकतावत्पदनिरूपितजन्यत्वविशिष्टबोधनिरूपिताविषयताश्रयाः । अध्याहृतपदार्थघटकवै० च स्वघटितत्व, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्व, स्वविशिष्टाघटितत्वैतत्त्रितयसम्बन्धेन । तृतीयसम्बन्धघटकवै० च स्वेतरत्व, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयावयवाघटितत्वैतदुभयसम्बन्धेन ।

ननु यस्यागमा इति विग्रहेऽवयवित्वं षष्ठ्यर्थमभ्युपेत्य यन्निष्ठावयवितानिरूपितावयवत्वावच्छिन्नविधेयताश्रय इति यदागमपदस्यार्थः कुतो नेत्याशङ्क्याह *प्रनिदारयतीति* । आकारावयवस्य रेफस्य दाशब्दावयवत्वमपि, "अवयवावयवः समुदायावयवोपि" इतिन्यायात् उद्देश्यतात्वाकारे एव, दाशब्देपि अपर्य्याप्त्योद्देश्यतासत्वे यत्पर्य्याप्तेत्यादिरर्थः ।

वस्तुतस्तु । स्वविशिष्टोद्देश्यतानिरूपितावयवत्वावाच्छिन्नविधेयताश्रयाः, स्वग्रहणेन गृह्यन्त इति परिभाषार्थः । वै०च स्वपर्य्याप्तत्व,स्वावयवत्वविशिष्टत्वाऽन्यतरसम्बन्धेन । द्वितीयवै० च स्वसामानाधिकण्यस्वोत्तरकालिकत्वोभयसबधेन । उत्तरकालिकत्वादिनिवेशात्प्रनिदारतीत्यत्र न दोषः । यमुद्दिश्येति मूलस्यात्रैव तात्पर्य्यात् । नन्वारशब्दे यदागमन्यायेनात्वं दकारोत्तरत्वञ्च स्वतः,इति दारशब्दे घुत्वं दुर्वारमितिचेन्न । "आने मुक्" ( पा० सू० ७ । २ । ८२ ) इतिमुग्विधानात्परिभाषाया अनित्यत्वकल्पनेनादोषात् ।

ननु मुग्विधानस्य न वैफल्यं, सूत्रसत्वे वार्णपरिभाषया दीर्घं बाधित्वा प्राप्तम् "आतोङित" ( पा० सू० ७ । २ । ८१ ) इति शास्त्रं तक्रन्यायेन बाधित्वा मुकि, यदागमन्यायेन दीर्घे च पचान इति । सूत्राभावे "आतोङित" इतिप्रवृत्त्या पचेन इति फलभेदस्य स्पष्टत्वादितिचेन्न । मुग्विधानस्येयादेशबाधनमात्रफलकत्वे "आतोङितो नानस्य" इत्येव वदेत् । तथाच तथान्यासस्यानित्यत्वज्ञापकत्वम् । *दिदीय इत्यादि* । नच "वुग्युटावुवङ् यणो" इतिवार्तिकारम्भसामर्थ्यान्न यणिति वाच्यम् । शास्त्रबाधापेक्षया परिभाषानित्यत्वज्ञापनस्यैवौचित्यात् । *जहारेति* । नच सन्निपातपरिभाषया णलव्यवहितपूर्वत्वरूपविनाशिका वृद्धिर्न स्यादिति वाच्यम् । "आत औ णल" ( पा० सू० ७ । १ । ३४ ) इति सूत्रविषये सन्निपातपरिभाषाया अप्रवृत्तेः । *तस्यचावयवसादृश्येति* । अवयवसादृश्यञ्चावयवि-

ग्रहणग्राह्यत्वम् । तथाच तेनैव यदागमन्यायो लब्धः । वर्णग्रहण इत्यस्य वर्णत्वव्याप्यधर्म्मघटितधर्म्मानयन इत्यर्थः ।

नचानेमुगिति सूत्रीयभाष्यविरोधपरिहारार्थं वर्णत्वव्याप्यधर्म्मस्य नातिदेश इत्येव ज्ञाप्यतामिति वाच्यम् । 'दिदीये' इत्यादावजादित्वस्यातिदेशापत्तेः । *पदान्तग्रहणेन ग्रहणादिति* । वस्तुतो नेदं युक्तं, पदान्तेत्यस्य वर्णसमुदायेपि सत्वेन वर्णत्वव्याप्यत्वाभावात् ।*आगमानामागमिधर्म्मवैशिष्ट्यमिति*। इदमपि न युक्तं फलाभावात् , रामाणामित्यादावामवृत्तिपदान्तत्वस्य नकारेऽतिदेशेन "पदान्तस्य" ( पा० सू० ८ । ४ । ३७ ) इति निषेधात् णत्वानापत्तेश्च ।

* किञ्च गुणादेरिति*। नायमपि दोषः। "उरण्रपर" (पा० सू०१। ७।५१ ) इतिशास्त्रबलेनाकारस्य रेफावयवकत्वात्, ऋकारस्य च मूर्द्धस्थानिकावयवकत्वात् अर एव प्रसक्तेः। "ऋकारस्य गुणवृद्धी अरारौ" इति भाष्यस्य ऋकारस्य यत्र गुणवृद्धी भवतस्तत्रारारावेव सम्पद्येते इति व्याख्या। "रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते" इति भाष्यादपि न विरोधः। गुणवृद्धिसंज्ञकोऽकारादी रेफशिरा अभिनिर्वर्तत इत्यर्थात्। रेफशिर इत्यत्रातद्गुणसंविज्ञानो बहुव्रीहिरेवञ्चाद्यदूषणमेव सम्यक्। उपदिश्यमानाकारान्तात्परत्वस्योपलक्षणत्वे तु तत्रापि न दोषः। परिभाषायां ज्ञापकमप्याह *अत एव नेटीति* ।

नन्वस्य यदागमपरिभाषाज्ञापकत्वं मास्तु आनुमानिकस्थान्यादेशभावेऽपि स्थानिवत्सूत्रप्रवृत्तिज्ञापकत्वमस्तु, अत आह *एरुरिति* । "आर्धधातुकस्येड्वलादेः" ( पा० सू० ७ । २ । ३५ ) इत्यादौ षष्ठ्या अवयवार्थकतया कल्पितवाक्यान्तरस्था षष्ठी स्थानित्वार्थिका । "एरुः" ( पा० सू० ३ । ४ । ८६ ) इत्यादौ तु इकारादिपदस्य तदन्ते लक्षणा स्थानित्वार्थिका षष्ठी तु क्लृप्तैव ।

परे तु पचमान इत्यत्र "तास्यनुदात्तेत्" ( पा० सू० ६ । १ । १८६) इति स्वरार्थम्, ऋकारस्य गुणवृद्धी अरारावेवेति नियमार्थञ्च परिभाषावश्यकत्वमेव । स्थानिवत्त्वेन तु न निर्वाहः । अकारान्तोपदिश्यमानत्वस्य गुणत्वस्य चाल्मात्रवृत्तिधर्म्मघटितत्वेन स्थानिवत्त्वाप्रवृत्तेरित्याहुः ॥ ११ ॥

निर्दिश्यमानस्यादेशा भवन्ति ॥१२॥

ननूदस्थादित्यत्र यदागमपरिभाषया न दोषः । "उदः स्थास्त-

म्भोः" ( पा० सू० ८ । ४ । ६१ ) इत्यत्र लुप्तसकारस्य प्रश्लेषेण तयोः सकारस्य पूर्वसवर्ण इत्यर्थादितिचेत् 'अपिबत्' इत्यत्र यदागमन्यायेन दोषसत्त्वात् ॥

*सूत्रमावर्तत इति*। सूत्रकारमते स्थानपदार्थलाभाय सूत्रस्यावश्यकत्वेनावृत्युपयोगः ॥ भाष्यकारमते तु यणादिपदसमभिव्याहारादेव षष्ठयाः स्थानार्थकत्वलाभात्सूत्रं "निर्दिश्यमानस्यादेशा" इत्यर्थकमेव। षष्ठयन्तमिति अतद्गुणसंविज्ञानम्। वस्तुतस्तु–सूत्रे यतः सेत्यध्याहारः। यतः षष्ठी सा स्थानेयोगेत्यर्थः। एवञ्च समानलिङ्गकत्वमप्युपपन्नम्। नच निर्दिश्यमानपदाध्याहाराऽतद्गुणसंविज्ञानाद्याश्रयरूपो दोषोऽपि। ननु 'अतिस'इत्यत्र तच्छब्दावयवतकारस्य सत्वं "तदोः सः सौ" (पा० सू० ७ । २ । १०६) इति न स्यात्। तच्छब्दस्य तत्पदादिपदसजातीयत्वाभावेन निर्दिश्यमानत्वाभावात्। तदवयवस्यैव स्थानेन योगाच्चाह*निर्दिश्यमानावयवरूपमेवेति*। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रयावयवरूपमेवेत्यर्थः।

निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिविशिष्टत्वम्। वै० स्वप्रयोज्य–शाब्दबोधीयविषयता–विशिष्टवर्णाघटितत्व—स्वजन्योपस्थितीयविषयताश्रयत्व—स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वैतत्त्रितयसम्बन्धेन। पूर्वत्र वै० स्वानाश्रयत्व–स्वाश्रयसमभिव्याहृतत्वैतदुभयसम्बन्धेन। उत्तरत्रवै०स्वसमभिव्याहृतत्व—स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वोभयसम्बन्धेन। तेन स्नात्वाकालकीकृत्य, व्याघ्रपदः, सुपदः, अपिबत्, प्रतिषिञ्चतीत्यादौ कुत्रापि न दोषः।षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रयत्वं वा तत्त्वम्।

*न प्रतीयमानमिति*। द्वितीयोपस्थितीयविषयताश्रयः।तदन्तस्य सागमस्य च द्वितीयोपस्थितिरिति न तयोः स्थानित्वम्। व्यक्तिपक्षे समाधानमाह *क्ङिश्चेति*–"अचिश्नु" (पा० सू० ६ । ४ । ७७) इत्यत्र श्वोरिव धातोरपि धातुपदीयनिर्दिश्यमानत्वात्, धातोः प्राप्तादेशव्यावृत्त्यर्थं ङित्वावश्यकत्वम्। अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितमुख्यविशेष्यत्वाप्रयोजिका षष्ठीप्रकृतिः। तेनाऽङ्गस्य न तत्वम्। मुख्यत्वं च प्रकारताऽसामानाधिकरण्यम्। *अकाज्विषये इति* अत्र ज्ञापकं "अनाप्यक"(पा० सू० ७ । २ । ११२) इतिसूत्रेऽग् ग्रहणम् यथा निर्दिश्यमानपरिभाषयैव वारणसम्भवादिति ॥ १२ ॥

ग्रहणग्राह्यत्वम् । तथाच तेनैव यदागमन्यायो लब्धः । वर्णग्रहण इत्यस्य वर्णत्वव्याप्यधर्म्मघटितधर्म्मानयन इत्यर्थः ।

नचानेमुगिति सूत्रीयभाष्यविरोधपरिहारार्थं वर्णत्वव्याप्यधर्म्मस्य नातिदेश इत्येव ज्ञाप्यतामिति वाच्यम् । 'दिदीये' इत्यादावजादित्वस्यातिदेशापत्तेः । *पदान्तग्रहणेन ग्रहणादिति* । वस्तुतो नेदं युक्तं, पदान्तेत्यस्य वर्णसमुदायेपि सत्वेन वर्णत्वव्याप्यत्वाभावात् ।*आगमानामागमिधर्म्मवैशिष्ट्यमिति*। इदमपि न युक्तं फलाभावात् , रामाणामित्यादावामवृत्तिपदान्तत्वस्य नकारेऽतिदेशेन "पदान्तस्य" ( पा० सू० ८ । ४ । ३७ ) इति निषेधात् णत्वानापत्तेश्च ।

* किञ्च गुणादेरिति*। नायमपि दोषः। "उरण्रपर" (पा० सू० १। ७।५१ ) इतिशास्त्रबलेनाकारस्य रेफावयवकत्वात्, ऋकारस्य च मूर्द्धस्थानिकावयवकत्वात् अर एव प्रसक्तेः । "ऋकारस्य गुणवृद्धी अरारौ" इति भाष्यस्य ऋकारस्य यत्र गुणवृद्धी भवतस्तत्रारारावेव सम्पद्येते इति व्याख्या। "रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते" इति भाष्यादपि न विरोधः । गुणवृद्धिसंज्ञकोऽकारादी रेफशिरा अभिनिर्वर्तत इत्यर्थात्। रेफशिर इत्यत्रातद्गुणसंविज्ञानो बहुव्रीहिरेवञ्चाद्यदूषणमेव सम्यक्। उपदिश्यमानाकारान्तात्परत्वस्योपलक्षणत्वे तु तत्रापि नदोषः। परिभाषायां ज्ञापकमप्याह *अत एव नेटीति* ।

नन्वस्य यदागमपरिभाषाज्ञापकत्वं मास्तु आनुमानिकस्थान्यादेशाभावेऽपि स्थानिवत्सूत्रप्रवृत्तिज्ञापकत्वमस्तु, अत आह *एरुरिति* । "आर्धधातुकस्येड्वलादेः" ( पा० सू० ७ । २ । ३५ ) इत्यादौ षष्ठ्या अवयवार्थकतया कल्पितवाक्यान्तरस्था षष्ठी स्थानित्वार्थिका । "एरुः" ( पा० सू० ३ । ४ । ८६ ) इत्यादौ तु इकारादिपदस्य तदन्ते लक्षणा स्थानित्वार्थिका षष्ठी तु क्लृप्तैव ।

परे तु पचमान इत्यत्र "तास्यनुदात्तेत्" ( पा० सू० ६ । १ । १८६) इति स्वरार्थम्, ऋकारस्य गुणवृद्धी अरारावेवेति नियमार्थञ्च परिभाषावश्यकत्वमेव । स्थानिवत्वेन तु न निर्वाहः । अकारान्तोपदिश्यमानत्वस्य गुणत्वस्य चाल्मात्रवृत्तिधर्म्मघटितत्वेन स्थानिवत्वाप्रवृत्तेरित्याहुः ॥ ११ ॥

निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

ननूदस्थादित्यत्र यदागमपरिभाषया न दोषः । "उदः स्थास्त-

म्भोः" ( पा० सू० ८ । ४ । ६१ ) इत्यत्र लुप्तसकारस्य प्रश्लेषेण तयोः सकारस्य पूर्वसवर्ण इत्यर्थादितिचेत् 'अपिबत्' इत्यत्र यदागमन्यायेन दोषसत्वात् ॥

*सूत्रमावर्तत इति*। सूत्रकारमते स्थानपदार्थलाभाय सूत्रस्यावश्यकत्वेनावृत्त्युपयोगः ॥ भाष्यकारमते तु यणादिपदसमभिव्याहारादेव षष्ठ्याः स्थानार्थकत्वलाभात्सूत्रं "निर्दिश्यमानस्यादेशा" इत्यर्थकमेव। षष्ठ्यन्तमिति अतद्गुणसंविज्ञानम्। वस्तुतस्तु–सूत्रे यतः सेत्यध्याहारः। यतः षष्ठी सा स्थानेयोगेत्यर्थः। एवञ्च समानलिङ्गकत्वमप्युपपन्नम्। नच निर्दिश्यमानपदाध्याहाराऽतद्गुणसंविज्ञानाद्याश्रयरूपो दोषोऽपि। ननु 'अतिस' इत्यत्र तच्छब्दावयवतकारस्य सत्वं "तदोः सः सौ" (पा० सू० ७ । २ । १०६) इति न स्यात्। तच्छब्दस्य तत्पदादिपदसजातीयत्वाभावेन निर्दिश्यमानत्वाभावात्। तदवयवस्यैव स्थानेन योगाच्चाह *निर्दिश्यमानावयवरूपमेवेति*। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रयावयवरूपमेवेत्यर्थः।

निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिविशिष्टत्वम्। वै० स्वप्रयोज्य–शाब्दबोधीयविषयता–विशिष्टवर्णाघटितत्व—स्वजन्योपस्थितीयविषयताश्रयत्व—स्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाघटितत्वैतत्त्रितयसम्बन्धेन। पूर्वत्र वै० स्वानाश्रयत्व–स्वाश्रयसमभिव्याहृतत्वैतदुभयसम्बन्धेन। उत्तरत्रवै० स्वसमभिव्याहृतत्व—स्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वोभयसम्बन्धेन। तेन स्नात्वाकालकीकृत्य, व्याघ्रपदः, सुपदः, अपिबत्, प्रतिषिञ्चतीत्यादौ कुत्रापि न दोषः। षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितीयविषयताश्रयत्वं वा तत्त्वम्।

*न प्रतीयमानमिति*। द्वितीयोपस्थितीयविषयताश्रयः। तदन्तस्य सागमस्य च द्वितीयोपस्थितिरिति न तयोः स्थानित्वम्। व्यक्तिपक्षे समाधानमाह *किञ्चेति*–"अचिश्नु" (पा० सू० ६ । ४ । ७७) इत्यत्र श्न्वोरिव धातोरपि धातुपदीयनिर्दिश्यमानत्वात्, धातोः प्राप्तादेशव्यावृत्त्यर्थं ङित्वावश्यकत्वम्। अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितमुख्यविशेष्यत्वाप्रयोजिका षष्ठीप्रकृतिः। तेनाऽङ्गस्य न तत्वम्। मुख्यत्वं च प्रकारताऽसामानाधिकरण्यम्। *अकाज्विषये इति* अत्र ज्ञापकं "अनाप्यक" (पा० सू० ७ । २ । ११२) इतिसूत्रेऽग्ग्रहणमन्यथा निर्दिश्यमानपरिभाषयैव वारणसम्भवादिति ॥ १२ ॥

यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः॥१३॥

*वाक्यभेदेनेति* । "स्थानेऽन्तरतम" (पा० सू० १।१।५०) इति सूत्रेऽन्तरतम इत्येकवाक्यम् पूर्वं पठनीयम् । स्थाने इत्यपरम् । तत्र पूर्ववाक्ये प्रसङ्गार्थकस्य स्थान इत्यस्यानुवृत्त्या प्रसङ्गे सति सदृशतम आदेश इत्यर्थः । द्वितीये स्थाने इति वाक्ये पूर्ववाक्यादनुवृत्त 'स्थाने' इति 'अन्तरतम'इति च पदद्वयमनुवर्तते । सूत्रस्थस्थाने इति स्थानेनेत्यर्थकम् । तथाच प्रसङ्गे सति स्थानेन स्थानघटितधर्म्मेण सदृशतम आदेशो भवतीत्यर्थः । पूर्ववाक्येनैव सिद्धे उत्तरवाक्यं स्थानेनैव सदृशतम इति नियमार्थमिदम् । तेनान्यादेशव्यावृत्तिः सिद्धा । सति सम्भव इति च योगविभागसामार्थ्यलब्धम् ॥

ननु वाक्यभेदे किं प्रमाणं, प्रसङ्गे सति स्थानेन सदृशतमो भवतीत्यर्थकमेव वाक्यमस्तु अत—आह *तमब्ग्रहणमिति* । वाक्यभेदज्ञापनद्वारा इति शेषः । तथाहि यद्येकमेव वाक्यं, स्थाने इत्यनुवृत्तश्च स्थानेनेत्यर्थकं, तर्हि प्रसङ्गे सति स्थानघटितधर्म्मेण सदृशतम एवादेशो भविष्यति, किन्तमब्ग्रहणेन । नच सादृश्येऽतिशयलाभार्थं तदस्तु । फलन्तु लाकृतिरित्यादौ वकाररूपयणभाव इति वाच्यम् । समानं स्थानं यस्येत्यर्थकसस्थानमित्यनेनैव सिद्धेऽन्तरग्रहणसामर्थ्यादन्तरतमलाभसम्भवात् । वाक्यभेदज्ञापिते तु पूर्ववाक्येऽर्थादिकृतसदृशानां विधानलाभायान्तरग्रहणस्य चारितार्थ्येन तत्सामर्थ्येनातिशयार्थलाभसम्भवात् । तल्लाभार्थं मतुपश्चारितार्थ्यम् । तेन च वाक्यभेदज्ञापनेनार्थादेवानेकविधान्तर्यस्यादेशनियामकत्वलाभः । सदृशतमत्वञ्च सादृश्यानुयोगित्वेन विवक्षितविशिष्टधर्म्मसाधारणधर्म्मकत्वम् । वै० स्ववृत्तित्व, स्वघटितदलघटकस्वेतरावृत्तित्वोभयसम्बन्धेन । स्वघटितदलघटकत्वञ्च स्वनिष्ठविषयताप्रयोजकपदप्रयोज्यविषयताश्रयत्वम् ॥ इति ॥ १३ ॥

अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥

शब्देऽर्थवैशिष्ट्यञ्च स्वविषयकबोधजनकत्वेन तात्पर्यविषयत्वसम्बन्धेनेति बोध्यम् ॥ १४ ॥

गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः ॥१८॥

*गुणादागत इति*। स्वशक्यतावच्छेदकसमानाधिकरणगुण-प्रतिसंधानप्रयोज्य-स्वशक्यतावच्छेदकप्रकारकाऽऽरोपीयविशेष्यताश्रयः स्वस्य गौणोऽर्थः। अप्रसिद्धे संज्ञादौ च गौणत्वं, गुणप्रतिसन्धानप्रयोज्यशक्यतावच्छेदकप्रकारकबोधविषयत्वम्। रामादिगतपित्राज्ञापालनकर्तृत्वादिकं गुणः। पूर्वत्र गुणप्रतिसन्धानं प्रमात्मकमुत्तरत्राऽऽरोपात्मकम्। *किन्तूपात्तमित्यादि*। उपात्तं सूत्रे उच्चार्यमाणं। विशिष्यार्थोपस्थापकम्=स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नबोधकम्। विशिष्टरूपम्=स्ववृत्तिधर्म्म=आनुपूर्वीरूपः। इदं पूर्वस्य व्याख्यानभूतम्। तथाच स्ववृत्त्यानुपूर्व्यवच्छिन्ने शक्तिर्गृह्यते। तस्यैव तत्पदप्रयोज्यविषयतावच्छेदकत्वमिति स्वीकारेण धातुभिन्नत्वादिविशिष्टार्थवत्वावच्छिन्ने, कृदन्तत्वावच्छिन्ने च शक्तिसत्वेऽपि प्रातिपदिकपदवत्वावच्छिन्ने लाघवात् शक्त्यन्तरकल्पनेनादोषात्।

नन्वोत्सूत्रे ओदन्तत्वाच्छिन्नविषयताप्रयोजकस्य ओत्पदस्य, निपातपदस्य वा सत्वेन विशिष्टरूपोपादानाभावात् गोऽभवदित्यादौ गौणमुख्यन्यायेन प्रगृह्यत्ववारणपरभाष्यविरोधोऽत आह—*चादित्वेनैव चादीनामुपस्थापकमिति*। आनुपूर्व्या साक्षादवच्छिन्नमुख्य—विशेष्यताप्रयोजकपदोपादानं विशिष्टरूपोपादानम्। साक्षादवच्छिन्नत्वञ्च-स्वावच्छिन्नत्व, स्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाभाववत्वोभयसम्बन्धेन स्वविशिष्टत्वं। मुख्यत्वञ्च प्रकारत्वासामानाधिकरण्यम्।

ओत्सूत्रस्थभाष्यप्रामाण्येन निपातपदस्य स्वाश्रयनिरूपितसङ्केतवत्त्वसम्बन्धेन निपातत्वरूपानुपूर्वीविशिष्टे शक्तिः कल्प्यते। तथा च निपातपदप्रयोज्यमुख्याविशेष्यतानिरूपिता स्वाश्रयसंङ्केतवत्वसम्बन्धावच्छिन्ना साक्षादवच्छेदकता निपातत्वरूपानुपूर्वीनिष्ठेति विशिष्टरूपोपादानत्वमुपपन्नम्। प्रातिपदिकपदे च स्वनिरूपितसङ्केतवत्वसम्बन्धेन प्रातिपदिकपदविशिष्टे शक्तिरिति मुख्यविशेष्यता प्रातिपदिकपदेनैव साक्षादवच्छिन्ना नत्वानुपूर्व्या। पदकार्यत्वञ्च-विभक्त्यनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वम्। अत्र

विभक्त्यनिमित्तकत्वांशः फलितः। स्त्रीत्वानिमित्तकत्वांशस्तु "जानपद" (पा० सू० ४।१।४२) इति सूत्रे "जातेरस्त्री" (पा० सू० ४।१।६३) इत्यनेनैव सिद्धे क्रियमाणनागग्रहणाज्ज्ञाप्यः। विभक्त्यनिमित्तकत्वांशो न फलित इत्याशङ्क्ते *गां पाठयेत्यादाविति*।

ननु त्वाद्यादेशाकरणेन पदसंस्कृत्याभूततदभावविवक्षायां जातसंस्कारस्य बाधायोगेन नैते दोषाः, अत आह-*किञ्चेति*। *अग्नीषोमाविति*। आग्निसोमावित्यादौ क्वचिद्द्वन्द्वं कृत्वा गौणार्थविवक्षा। क्वचिच्च पदे गौणार्थविवक्षां कृत्वा द्वन्द्व इति। यत्र च गौणार्थविवक्षा पूर्वं तत्र नेत्वषत्वे, जाते च द्वन्द्वे भवत एव। ननु गौर्वाहीक इत्यादौ गाम्पाठयेदित्यादौ च प्रातिपदिककार्य्यत्वेन गौणमुख्यन्यायप्रवृत्तिवारणपरभाष्यासङ्गतिरत आह-*अर्थाश्रय इति*। इति॥ १५॥

## अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति॥ १६॥

"कार्म्मस्ताच्छील्ये" (पा० सू० ६।४।१७२) इत्यनेन-अन्निति विहितप्रकृतिभावबाधनार्थं टिलोपनिपातनमेकदेशानुमत्या ऽस्यां ज्ञापकम्। परिभाषाऽभावेऽनर्थकत्वात्प्रकृतिभावाप्राप्तिरिति॥१६॥

## एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः॥१७॥

## क्वचिदेकदेशोऽप्यनुवर्त्तते॥ १८॥

*तद्विरोधादिति*। सूत्रारम्भसामर्थ्याच्चञो निवृत्तौ ज्ञापितायां स्वांशे चारितार्थ्याभावश्चेत्यपि बोद्धव्यम्।

ईदूदेत्सूत्रात "अदसोमात्" (पा० सू० १।१।१२) इति सूत्रे पकारानुवृत्त्यभावार्थं क्रियमाणं, आद्ग्रहणं पूर्वस्यां ज्ञापकम्॥ "लिङ्सिचौ" (पा० सू० १।२।११) इत्यतः सिज्ग्रहणेऽनुवर्तमाने "हनः सिच्" (पा० सू० १।२।७७) इत्यत्र सिज्ग्रहणञ्च। *"पक्षात्तिरिति सूत्रे कैयट इति*। "औतोऽम्शसोरित्यत्र वासुपीत्यतो वेति निवृत्तं सुपीत्यनुवर्तते" इति भाष्यविरोधः। 'अचिनवम्' इत्यत्राऽऽत्ववारणार्थं प्रवृत्तं तद् भाष्यम्॥ १७॥ १८॥ इति।

## भाव्यमानेन सवर्णानां ग्रहणं न॥ १९॥

"इसौ" इत्यादौ अतुनीसकाकारस्य विधानेपि शुद्धस्यैवौकारस्य "वृद्धिरेचि" (पा० सू० ६।१।८८) इत्यनेन विधानान्न दोषः। अनु-

नासिकस्यैचोऽभावात्। एवं बहुवचनेपि(१) न दोषः। परस्यैकारस्य द्विमात्रिकत्वेन तत्सदृशगुणकस्यैव विधानात्। अत आह *इममित्यादाविति*। भाव्यमानेन-विधेयभूतेन हेतुना सवर्णानां ग्रहणं न भवति। *नेत्यर्थ इति*। योगविभागसामर्थ्येनेदं लभ्यते। *प्रकारान्तरेणेति*। "ईहल्यघोः" (पा० सू० ६।४।३) इत्यत्र ह्रस्वेकारकरणेन ग्राहकसूत्रबलेन दीर्घे सिद्धे, दीर्घैकाराविधानात् आदेशे, इड्विधानेन ग्राहकशास्त्रेणैव सिद्धे, "वृतोवा"(पा० सू० ७।२।३८) इति सूत्रारम्भसामर्थ्यात् आगमे, अनभिधानात् प्रत्यये, सवर्णग्रहणाभावे सिद्धेऽप्रत्ययग्रहणसामर्थ्यादेकदेशानुमत्या इयं परिभाषा ज्ञाप्यते। अप्रत्ययपदस्य न भाव्यमानार्थकत्वमित्यत्र प्रमाणमाह *अत एवेति*। *किञ्चेति* अप्रत्ययपदस्य भाव्यमानार्थत्वे इदं भाष्यं विरुध्येत।

ननु ज्ञापितायामप्यस्यां कथं स्वांशे चारितार्थ्यम्। ह्रस्वाकारविधानेऽपि सवर्णदीर्घेण रूपासिद्धेः,। नच पररूपेण दीर्घबाधः स्यादिति वाच्यम्। लोपग्रहणमनुवर्त्यैकारस्य लोपविधानेनैव सिद्धेऽकारविधानसामर्थ्यात्पररूपाप्रवृत्त्या दीर्घप्रवृत्तेः सूपपादत्वादितिचेन्न। अकारविधानसामर्थ्येन पररूपं नेति कल्प्यते, अहोस्विदविकृताकार एव श्रूयते इत्यत्र विनिगमकाभावेनाकारविधानस्यावश्यकत्वात्।

परिभाषार्थस्तु-स्वविशिष्टो यस्तद्विशिष्टस्य ग्राहकं विधेयताप्रयोजकपदं नेत्यर्थः। वै० स्वतादात्म्य, स्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायघटकत्वबत्वैतदन्यतरसम्बन्धेन। अन्त्यवै० स्वसवर्णत्व-स्वावृत्तिधर्म्मवत्वोभयसम्बन्धेन। स्वतादात्म्यनिवेशस्य फलं "त्यदादीनामः" (पा० सू० ७।२।२७) इत्यादौ। इतरस्य "इकोयणचि" (पा० सू० ६।१।७७) इत्यादौ॥ १९॥

**भाव्यमानोप्युकारः सवर्णान् गृह्णाति॥ २०॥**

उश्च ऊश्चेति समाहारद्वन्द्वे तु न सिद्धिः। ह्रस्वोकारस्य घित्वेन पूर्वनिपातेऽपरनिमित्तकत्वेनान्तरङ्गत्वात् "ह्रस्वो नपुंसके प्रातिपदिकस्य" (पा० सू० १।२।४७) इति ह्रस्वत्वे पश्चात्सवर्णदीर्घे लक्ष्येलक्षणन्यायेन पुनर्ह्रस्वत्वाप्रवृत्त्या रूपासिद्धेः।

---

(१) "इमे" इत्यत्रेत्यर्थः।

न च ज्ञापितेऽपि स्वांशे चारितार्थ्याभावो वकारस्य द्विमात्रान्यून-कालिकत्वेनान्तरतम्याद् ह्रस्वस्यैव प्रवृत्तेरिति वाच्यम् । दिवमिच्छतीत्यर्थे क्यजन्तात्क्विप्यल्लोपयलोपयोरूठि श्यामि च, द्युभ्यामित्यादौ ह्रस्वार्थं तस्यावश्यकत्वात् ।

*ऋत उद्दिति* । सूत्रान्तरप्राप्तदीर्घाभावार्थन्तपरत्वमिति तु न । 'ऊ रपर' इति भाष्यप्रयोगे 'सवितृ रश्मयो यथा' इति रामायणप्रयोगे च दीर्घदर्शनात् । वस्तुतस्तु नैतत्परिभाषायाः फलम् । नचोक्तार्थासिद्धिः । ह्रस्वदीर्घयो : समाहारद्वन्द्वे सौत्रत्वाद्दीर्घे कृते ह्रस्वप्रवृत्तेः अदस इत्यत्र दोषाभावात् । "दिव उत्" (पा० सू० ६ । १ । १३१ ) इत्यादौ तपरत्वं स्पष्टार्थं मुखसुखार्थं वा । न तु व्यर्थं सत्परिभाषायां ज्ञापकम् ॥ इति ॥ २० ॥

## वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

ननु "न लुमताङ्गस्य" ( पा० सू० १ । १ । ६३ ) इत्यनेन लुमच्छब्देन लुप्तप्रत्ययनिमित्तकं कार्य्यमङ्गस्य नेत्यर्थेनात्र प्रत्ययलक्षणाभावान्न दोष इत्यवतरणासङ्गतिरितिचेन्न । अङ्गपर्य्याप्तधर्म्मेण साक्षात्परम्परया वा ऽवच्छिन्ना या लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नोद्देश्यता तन्निरूपकं कार्य्यं नेत्यर्थकरणेन निर्दिश्यमानत्वावच्छिन्नोद्देश्यता याऽस्ति तस्याः परम्परया अङ्गपर्य्याप्तधर्म्मेण साक्षाद् लुप्तप्रत्ययाव्यहितपूर्वत्वेन चावच्छिन्नत्वात्तामादाय 'निर्जरपुत्र' इत्यादौ निषेधप्रवृत्तेः, एतदवतरणसंभवात् । यदि त्वङ्गवृत्तिर्या षष्ठ्यन्तपदप्रयोज्या विषयता लुप्तप्रत्ययाऽव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना तन्निरूपकं कार्य्यं नेत्यर्थस्तदा 'गोहितम्' इत्यादौ दोषाभावात्, चित्रायां जाता चित्रेत्येवावतरणं युक्तम् ।

नन्वन्तरङ्गानपीतिन्यायेनानुबन्धलोपात्प्रागेव प्रत्ययलुकि प्रत्ययलक्षणेन ङेबुद्धिरेव स्यान्नतु घेबुद्धिरितिचेन्न । 'हे वारे' इति भाष्यप्रयोगात्संज्ञापेक्षया लुकः प्राबल्याबोधनात् । अन्यथा संज्ञापेक्षया लुकः प्राबल्येन प्रागेव सम्बुद्धिलोपे प्रत्ययलक्षणेनापि गुणो न स्यात् । कथमन्यथा सम्बुद्धिसंज्ञायां कृतायां लुकि प्रत्ययलक्षणेन सम्बुद्धिगुणस्तत्र ।

परेतु, गवेहितमितिवद् गोहितमिति अत्रापि आवादेशापत्तिः । अत्र गावौ हितौ यस्येति विग्रहः । वर्णाश्रय इत्यस्य लुप्तप्रत्ययवृत्तिर्या

वर्णत्वव्याप्यधर्म्मावच्छिन्ना विषयता तन्निरूपके कार्य्ये इत्यर्थः । तेन येधा इत्यादौ रुत्वे कार्य्ये नो प्रत्ययलक्षणनिषेधेन पदत्वानापत्तिः । अन्यथा वर्णाश्रयत्वान्निषेधः स्यात् । स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वरूपप्राधान्यात् तल्लक्षणमित्येव सिद्धे, प्रत्ययग्रहणात्प्रत्ययत्वव्याप्येत्यादिवक्ष्यमाणोऽर्थः । स्थानिवदित्यनुवृत्यैव सिद्धे प्रत्ययलक्षणग्रहणात्प्रत्ययप्राधान्यलाभः ।

*प्रत्ययस्येतराविशेषणत्वरूपमिति* । अवयवत्वसम्बन्धावच्छिन्नप्रकारताभिन्नप्रत्ययत्वव्याप्यधर्म्मावच्छिन्नविषयताश्रयत्वम् तत्वम् । तेन चित्रा गोहितमित्यादौ न कुत्रापि दोषः । *वर्णप्राधान्यमिति* । अवयविनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वं तत्वम् । प्रत्ययनिरूपितेत्यादिद्वितीयलक्षणादरात् । तदनादरे तु प्रत्ययत्वव्याप्यधर्म्मावच्छिन्नेति निवेश्यम् । मित्रशीरतृणेडित्यादौ कुत्रापि न दोषः ।

*इयमल्विधाविति* । वार्तिकमते मित्रशीरतृणेडित्यर्थं सूत्रमावश्यकम् । तन्मते गोहितमित्याद्यर्थं परिभाषा मन्तव्या । सूत्रनियमार्थत्वावदिभाष्यमतेतु नैषाऽऽवश्यकी सूत्रस्य नियमार्थत्वेनैव वारणात् । भाष्यकारमते प्रत्ययत्वव्याप्यधर्म्मस्य यत्राश्रयणं तत्रैवेदं प्रवर्तत इत्यर्थः । वार्तिककारमते प्रत्ययत्वव्याप्यविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्म्माश्रयं कार्य्यं प्रत्ययलोपे सति भवतीत्यर्थः ॥ २१ ॥

## उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

निगदेनैव नीतार्थेति ॥ २२ ॥

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २३ ॥

*देवादेरिति* । ततश्च सुलोपः स्यात् । प्रातिपदिकावयवसुप्साहचर्य्येण धात्ववयोऽपि सुप्संज्ञाप्रयोजक एव गृह्यत इति चेन्न । पदसंज्ञाप्रयोजकत्वस्य तत्रापि सत्वात् । नच वृत्तिप्रयोजकत्वेन साहचर्य्यं । परिभाषाऽभावे देवदत्तो गार्ग्येति समुदायस्यापि तद्धितान्तत्वेन प्रातिपदिकत्वात्तदवयवस्य सुपो वृत्त्यप्रयोजकत्वाभावात् । छित्वापत्तिरपि दोषः । देवादेरित्यत्र अनभ्यासस्येत्यस्यानुवृत्त्या सप्तान्तविशेषणत्वे तु न दोषः ।

*शब्दस्वरूपमिति*। यत्र प्रत्ययस्य विशेष्यं सूत्रे नोपात्तं, यथाऽङ्याबित्यत्र, तत्रोपस्थिततदादिशब्दस्वरूपविशेषणादेव तदन्तविधिः। यत्र च विशेष्यान्तरं सूत्रे उपात्तं यथा "यञिञोश्च" (पा० सू० ४।१।१०१) इत्यत्र प्रातिपदिकादिति तत्र तदेवादाय तदन्तविधिः। तत्रोपस्थिततदादेरभेदेन तदन्तेऽन्वयः। क्वचित्तु लक्ष्यानुरोधात् प्रमाणान्तराद्वा विशेष्यान्तरसत्त्वेपि तदादिमादाय तदन्तविधौ पुनर्विशेष्यान्तरमादाय प्रत्यायान्तदादौ तदन्तविधिः। यथा "वनोरच" इत्यादौ। "नित्यं समासे" (पा० सू० ७।३।४५) इतिसूत्रेऽनुत्तरपदग्रहणं तदन्तविधौ ज्ञापकम्। *यत्तुप्रत्ययेनेत्यादि*। अत्रानुमानप्रयोगः—प्रत्ययः स्वप्रकृत्यवयवकसमुदायविशिष्टः। परत्वावच्छिन्नविधेयताश्रयत्वात्—इत्याकारकः। हेतौ परत्वे सतीति विशेषणदाने, इयानित्यादौ व्यभिचारवारणेऽपि, आक्षिप्तस्य शाब्दबोधे भानाभावेन परिभाषा मन्तव्यैव।

*यत्र प्रत्ययइति*। यथा "स्यतासी लृलुटोः" (पा० सू० ३।१।३३) "सुपि च" (पा० सू० ७।३।१०२) इत्यत्र तदन्तांशोपस्थितौ लृडन्त-लुडन्त-तदादौ, सुबन्ततदादावित्यर्थः स्यात्। तथा सति द्वितीयाङ्गादेः कार्य्यं स्यात्। तदन्तांशानुपस्थितौ तु लृलुटौ यस्माद्विहितौ तदादेर्धातोः, सुब्यस्माद्विहितस्तदादेरङ्गस्येत्यर्थः। *एङ्ह्रस्वादिति*। अङ्गाक्षेपेण तदन्तविधिर्न युक्तः सम्बुद्धिर्यस्माद्विहिता तदादेरेङन्ताद्ध्रस्वान्तादित्यर्थः। उभयत्रापि तदन्तांशानुपस्थितौ मूलमग्रिमपरिभाषैव। पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताप्रयोजकपदं तदन्तबोधकं नेत्यर्थात्।

*परमगार्ग्यायण इति*। तद्धितप्रत्ययः स्वार्थान्वयितावच्छेदकधर्म्मावच्छिन्नवाचकतापर्य्याप्त्यधिकरणाद् भवतीत्युत्सर्गाभ्युपगमान्न स्यात्। एतद्भाष्यबलात् तादृशपर्य्याप्त्यधिकरणघटकादपि भवति, इति कल्प्यते। राजपौरुषिरित्यादौ तु न। उक्तज्ञापकस्य प्रत्ययान्तत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यकतद्धितविषयकत्वात्। *प्रत्ययमात्रग्रहण इति*। केचित् प्रतीषिषतीत्यादावुत्तरखण्डस्याप्रत्ययत्वात्। सन् पदस्य प्रत्ययेतरबोधकत्वेन "सनाद्यन्ता" (पा० सू० ३।१।३२) इत्यत्र परिभाषाप्रवृत्तिर्न स्यात्तदर्थं प्रत्ययबोधकत्वे सति प्रातिपदिकाबोध-

कत्वं प्रत्यमात्रग्रहणत्वमित्यर्थमाहुरिति ॥ २३ ॥

## प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताप्रयोजकं पदं तद्घटकं वा तदन्तबोधकं नेत्यर्थः । *कार्य्यान्तरविधानायेति* । "ऋन्नेभ्य" (पा० सू० ४ । १ । ५)इत्यादौ प्रत्ययविधौ वाक्यार्थबोधात्प्राक् ङीबादेः प्रत्ययत्वाभावेन नैतत्परिभाषाप्रवृत्तिः । परिगृह्यत इत्यस्य तद्बोधकं पदमुच्चार्य्यत इत्यर्थः । *तदन्तविधिर्नेति* । प्रत्यासत्या तादृशं प्रत्ययबोधकं पदं तदन्तबोधकं नेत्यर्थः । *रदाभ्यामिति* । एतत्परिभाषाया अभावे निष्ठापदेन निष्ठा यस्माद्विहिता तदादितदन्तोपस्थितौ, निष्ठान्ततदाद्यवयवो यो रदाभ्यां परस्तकारस्तस्य नत्वमित्यर्थः । परिभाषासत्वे तु निष्ठापदस्य तदन्तबोधकत्वाभावेन तदादिशब्दस्वरूपं विशेष्यीकृत्य तदन्तविधौ, रेफान्तो दान्तश्च यो निष्ठा यस्माद्विहिता तदादिस्ततः परस्य निष्ठावयवतकारस्य नत्वमित्यर्थः । 'दृषत्तीर्ण' इत्यत्र धातुतकारस्य 'अन्त्यबाधेऽन्त्यसदेशस्य' इत्यनेन नत्ववारणे 'दृषत्तीर्णवान्' इत्यस्योपलक्षणं मूलम् ।

नन्वयवयषष्ठीविषयेपि निर्दिश्यमानपरिभाषाप्रवृत्त्या निष्ठान्ततदाद्यवयवो यो निष्ठापदीयनिर्दिश्यमानस्तदवयवस्य रदाभ्यां परस्य तकारस्य नत्वमित्यर्थेन धातुतकारस्य नत्वाभाव इति चेत्तदा अन्-धातोः क्विपि अ-शब्देनाऽऽन्शब्दस्य बहुव्रीहौ "डाबुभाभ्याम्" (पा० सू० ४ । १ । १३) इत्यापि टिलोपे "अनुदात्तौ सुप्पितौ" (पा० सू० ४ । १ । १३) इत्यनुदात्तादाशब्दादाचारक्विबन्तात् कर्तरि क्विपि, नपुंसकह्रस्वत्वे अ इत्यनुदात्तं, तस्मादाचारक्विबन्तात् क्तप्रत्यये "एकाच" (पा० सू० ७ । २ । १०) इत्यनिटि अतोलोपे त इति, तस्य दृषदित्यनेन सम्बन्धे दृषत्त इत्यत्र नत्वापत्तेः । *एकविषयत्वमेव* । विभिन्नविषयकत्वे रेफान्तो दान्तश्च यो निष्ठा यस्माद्विहिता तदादिस्तस्मात् परस्य निष्ठान्तावयवतकारस्य नत्वमित्यर्थः स्यात् । "हलङ्याब्भ्यः" (पा० सू० ६ । १ । ६) इत्यादौ ङ्याबन्ततदाद्यन्ततदादेः परेषां सुतिसीनां हलो लोप इत्यर्थः । "वनोरच" (पा०सू०४ । १ । ७) इत्यादाविव तदादेर्विशेष्यान्तरस्य सत्वेपि प्रथमतदन्तविधिः । अत्र च "उत्तमैकाभ्याम्" (पा०सू०५ । ४ । ९०) इत्यस्य

ज्ञापकत्वम् ॥ २४ ॥

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥२५॥

*कुमारीति* नन्वियं शङ्का नोदयमर्हति, सुपिचेत्यादाविव पूर्वपरिभाषयैव वारणसम्भवात् । अत एव न तरबाद्यंशे तदन्तविधिः। अन्यथा प्राथम्येन कुमारी ब्राह्मणितरेत्यस्यैवोदाहरणत्वमवतरणे वक्तु युक्तं स्यादितिचेन्न ।तदादिरूपविशेष्यकतदन्तविधेरेवपू र्वपरिभाषया निषेधात् । अत एव "रात्रेः कृति" (पा० सू० ६ । ३ । ७२) इत्यादावुत्तरपदं विशेष्यमादाय तदन्तविधेर्न तया निषेधः । प्रत्ययवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नविषयताप्रयोजकपद एवैतस्याः प्रवृत्तिस्वीकारेणानया तत्र निषेधो नेति । घांशे न तदादिविशेष्यकतदन्तविधिः, संज्ञाविधावितिनिषेधात् । स्वप्रदेशे निषेधसामर्थ्येन विधिप्रदेशेपि निषेधात् । वयोवाचके वैकल्पिकजातिकार्य्यस्येष्टत्वेन तेन "जातेश्च" (पा० सू० ४ । १ । ६३) इति पुंवद्भावो नाशङ्क्यः । ब्राह्मणिरूपेत्यत्र ह्रस्वानापत्तिरपि बोध्या । अवतरणग्रन्थे पुंवद्भावं बाधित्वा परत्वाद्ध्रस्वापत्तिरिति बोध्यम् । *लेखग्रहणमिति* । ननु लेखग्रहणे तदन्तविधौ हृत्परमलेख इति भवति । तदभावेऽणन्ततदादिरूपोत्तरपदत्वाभावेन हृदयपरमलेख इति वैषम्यात्कथं परिभाषाज्ञापकत्वमितिचेन्न । "गिलेऽगिलस्य" (पा० वा०)इत्यत्र तदन्तविधौ सत्यां,गिलान्त उत्तरपदे परे इत्यर्थेन तिमिंगिल इत्यस्य सिद्धौ,गिलगीलेचेत्यारम्भसामर्थ्यात् "उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तविधिः" इतिपरिभाषान्तरज्ञापितत्वाल्लेखशब्दे तदन्तविध्यभावात् । तथाच श्रावणप्रत्यक्षविषयतावच्छेदकधर्म्मावच्छिन्नविषयताप्रयोजकं पदमुत्तरपदं विशेष्यीकृत्य तदन्तप्रयोजकं न भवतीति परिभाषाद्वयस्थाने पाठ्यं, तेन गौरवाभावः ॥२५॥

## स्त्रीप्रत्यये चानुपसर्जनोति ॥ २६ ॥

*नन्विति* नन्विदमवतरणमसंङ्गतं पूर्वपदरूपविशेष्यसत्त्वेन तदादिविशेष्यकतदन्तविध्यभावेऽपि पूर्वपदरूपविशेष्यमादाय तदन्तविधिः । तथाच तदाद्यभिन्नं यत्ष्यङन्तं पूर्वपदमित्यर्थस्वीकारात्परमकारीषगन्ध्येत्यत्र सम्प्रसारणाप्राप्त्या ङ्ष्यान्तत्वासम्भवात् । परमकारीषगन्धीपुत्र इत्यत्रेवतिकारीषगन्ध्यापुत्र इत्यत्रापि स्यादर्थान्न

स्यादिति तु न वाच्यं, तत्राभावस्यैवेष्टत्वात्।

नचोत्तरपदाधिकार इत्यस्य पदघटितषष्ठ्यन्तपदमादायप्राप्तस्य तदन्तगिधेर्निषेधकत्वेऽपि पूर्वं तदादिविशेष्यकतदन्तविधौ पश्चात् पूर्वपदमादाय तदन्तविधिः। ष्यङन्ततदादेः प्रत्ययमात्रग्रहणत्राभावात्। ततश्च ष्यङन्ततदाद्यन्तपूर्वपदस्येत्यर्थेन परमकारीषगन्धीपुत्र इत्यस्य दृष्टान्ततेति वाच्यम्। एवं सत्यतिकारीषगन्ध्यापुत्र इत्यत्र दोषस्य सत्वात्, इतिचेन्न।

तदाद्यभिन्नं यत्ष्यङन्तं पूर्वपदमित्यादिपूर्वोक्त एवार्थः। अतिकारीषगन्ध्यापुत्र इत्यत्रेत्यास्याग्रे इवशब्दः। ततश्च तत्र स्वाभावत्वसम्बन्धेन भवति, तथाऽत्रापि स्यात्, अर्थान्नस्यादिति फलितम्। *स्त्री प्रत्यय इति*। स्त्रीप्रत्ययान्ततदादावित्यर्थः।'अनुपसर्जन' इति स्त्रीप्रत्ययान्ततदादेर्विशेषणम्। शास्त्रीयमेवोपसर्जनत्वं ग्राह्यम्। तथा चानुपसर्जने स्त्रीप्रत्ययान्ततदादौ सति तदादिनियमो नेत्यर्थः। अधिकव्यावर्तको नेति यावद्। तदादिघटिते तदादित्वारोप इति तत्वम्। एवञ्च परमकारीषगन्ध्याशब्दे ष्यङन्ततदादित्वारोपेण संप्रसारणसिद्धिः। अतिकारीषगन्ध्याशब्दे तदारोपाभावेन सम्प्रसारणाभावः। कन् लुबन्ते च स्वत एव तदादित्वम्।

यद्वा "ष्यङः सम्प्रसारणम्" ( पा० सू० ६।१।१३ ) इति सूत्रे ष्यङ्पदावृत्तिः। एकमुपसर्जनतात्पर्य्यकमपरमनुपसर्जनतात्पर्य्यकम्। तत्रानुपसर्जनतात्पर्य्यके एषा परिभाषा प्रवर्तते। स्वान्तसमुदायपर्य्याप्तशक्तिनिपरूकार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वम्। यद्वा स्त्रीप्रत्ययबोधकपदघटिते शास्त्रेऽनुपसर्जनेनेति तृतीयान्तमुपतिष्ठते। न तु तत्र तदादेरुपस्थितिरिति परिभाषार्थः। तृतीया चात्राभेदे। तथाचानुपसर्जनष्यङन्तपूर्वपदस्य संप्रसारणमित्यर्थः। स्वान्ततदाद्यव्यवहितपूर्वपदप्रयोज्यविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वरूपम्। अतो न कनलुबन्ते फलभेदः (१)। *वाचनिक्येवेति* भाष्यकृता ज्ञापकं नोपन्यस्तमिति भावः। वस्तुतस्तु अङ्गसंज्ञासूत्रे "नेय-

---

(१)अनुपसर्जनाभिन्नो यः स्त्रीप्रत्ययस्तदन्तं यदुपसर्जनं तदन्तस्य ह्रस्वः। तृतीयान्तोपस्थितिकल्पे, अनुपसर्जनवाक्यकल्पे च उपसर्जनस्त्रीप्रत्ययान्ततदादिरूपं यदुपसर्जनं तस्य ह्रस्व इत्यर्थः।

ङुवङ्स्थानावस्त्री" ( पा० सू० १।४।४ ) इत्यतोऽस्त्रीपदानुवृत्तिः । तस्य स्त्रीबोधकभिन्नोऽर्थस्तस्य च प्रत्ययेऽन्वयः । सच प्रधानाप्रधानन्यायेनानुपसर्जन एव गृह्यते । तथाचानुपसर्जनस्त्रीबोधकभिन्नप्रत्यये गृह्यमाणे तदादिरित्युपतिष्ठत इति परिभाषालाभ इति ॥ २६ ॥

## संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

एतदर्थस्तु संज्ञानिष्ठविधेयतया साक्षान्निरूपितप्रत्ययत्वव्याप्यधर्म्मावच्छिन्नोद्देश्यताप्रयोजकं पदं तदन्तबोधकं नेति । वस्तुतस्तु नास्या उपयोगः । प्रत्ययग्रहणपरिभाषया तदादीतिप्रातिपदिकमात्रस्योपस्थितिः । तथाच यथा "एङ् ह्रस्वात्" ( पा० सू० ६ । १ ६९ ) इत्यादौ पञ्चम्यन्तता । तथा यत्रैतत्परिभाषाप्रवृत्तिरिष्यते तत्र तदादिपदस्य पञ्चम्यन्ततैव । तथाच न क्वापि प्रत्ययग्रहणे तदन्तविधिः प्रसज्जते । अन्तग्रहणे च सति तदादिविशेष्यकतदन्तविधौ सुप्तिङ्पदस्यान्तशब्देन बहुव्रीहौ सुबन्तान्ततिङन्तान्तयोः पदसंज्ञा, तदभावे सुबन्ततिङन्ततदादेरिति फलभेदात् कथं ज्ञापकत्वमिति न वाच्यम् । अन्तग्रहणे सति तदादेरुपस्थितावपि सुप्तिङन्तेऽभेदेनान्वयाभ्युपगमात् सुप्तिङोरप्रधानत्वात् ॥२७॥

## कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥

कृन्मात्रनिष्ठविषयताप्रयोजकपदं कृद्विशिष्टे लाक्षणिकमित्यर्थः । वै० च स्वनिष्ठचरमावयवतानिरूपकत्व-स्वाविशिष्टाघटितत्वोभयसम्बन्धेन । पुनर्वै० स्वेतरत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाव्यवहितपूर्वत्वविशिष्टगतिकारकान्यतरेतरत्वैतत्त्रितयसम्बन्धेन । *पदात्परत्वाभावेनेति* । इदं न युक्तं तत्र पदादित्यस्य निवृत्तेः । *नचाभ्युद्धृतमित्यादावभिनेति*। नचोद्धृतशब्दस्याभिना समासेऽप्युद्धृतरूपसमासीयपूर्वपदत्वमुदोऽक्षतमेवेति कथमपूर्वपदत्वं तस्येति वाच्यम् । तत्समासे प्रवृत्तं "गतिरनन्तर" ( पा० सू० ६ । २ । ४९ ) इतिशास्त्रं तत्समासीयथाथादिस्वरबाधकं स्यात् । विशिष्टसमासीयथाथादिस्वरबाधनार्थं "गतिरनन्तर" इतिप्रवर्तनीयन्तच्च न स्यादुदोऽपूर्वपदत्वादतोऽनन्तरग्रहणसामर्थ्यादपूर्वपदेऽपि प्रवृत्तिरस्त्वित्याशयः ।

अभ्युद्धृतशब्दे समासस्वरः प्राप्तस्तं बाधित्वा ऽव्ययपूर्व-

पदप्रकृतिस्वरस्तं बाधित्वा, गतिकारकोपपदादिति कृत्स्वरस्तम्बाधित्वा थाथादिस्वरस्तम्बाधित्वा गतिरनन्तर इतिप्रकृतिस्वर इति प्रक्रिया। 'गतिरनन्तर' इत्यस्याभावेऽपि नियमेन थाथादिस्वरवारणाद् "गतिकारकोपपदात्" ( पा० सू० ६। २। १३९ ) इति कृत्स्वरेणोद उदात्तत्वसिद्धेरितिसमाधानग्रन्थाशयः। परिभाषाज्ञापनसमये परिभाषाया अभावेनोत्तरपदं विशेष्यीकृत्य कृदन्तान्तमुत्तरपदमित्याद्यर्थस्वीकारेण कृत्स्वरस्य थाथादिस्वरस्य वा प्राप्तिः। परत्वात्=अपवादत्वात्। *नतु कृद्ग्रहण इति*। तेन कुम्भकारेयसिद्धिः॥ इति॥२८॥

## पदाङ्गाधिकारे तस्य तदन्तस्य च ॥ २९ ॥

निगदेन नीतार्थैषा ॥ २९ ॥

## व्यपदेशिवदेकस्मिन् ॥ ३० ॥

मूलं स्पष्टम् ॥

अकारविशिष्टत्वमदन्तत्वम्। वै० स्वघटितत्व-स्वध्वंसाधिकरणक्षणवृत्तिवर्णाघटितत्वोभयसम्बन्धेन। नच "आद्यन्तवदेकस्मिन्" (पा० सू० १। १। २१) इति सूत्रेण "अपूर्वलक्षणत्वाद्वा" इतिवार्तिकेण वा सिद्धे इयं परिभाषा निष्फलेति वाच्यम्। धुगित्यादौ धातोर्धात्ववयवत्वस्य सूत्रवार्तिकाभ्यामसिद्धेः। वार्तिकरीत्या मुख्यत्वापत्तेश्च।

असहायत्वञ्च—अतिदिश्यमानधर्म्मवदसमभिव्याहृतत्वे सति अतिदिश्यमानधर्म्मवदघटकत्वे सत्यतिदिश्यमानधर्म्मवदघटितत्वम्। सभाऽऽकारे आदित्वातिदेशः। आसन्नयनशब्दे प्रातिपदिकत्वातिदेशः। सभासन्नयनशब्दे वृद्धत्वातिदेशश्च यथाक्रमं विशेषणान्न। एवं दरिद्रेकारे नान्तत्वं, दरिद्राशब्दे इवर्णान्तत्वं वा न। हरिषु इत्यादौ सोः पदत्वञ्च। पदत्ववद्घटकत्वात्।

परिभाषार्थस्तु स्वविशिष्टे स्वस्यातिदेशो भवतीति। वै० स्वाश्रयाघटकत्व-स्वाश्रयासमभिव्याहृतत्व—स्वाश्रयाघटितत्वैतत्त्रितयसम्बन्धेन। स्वमुखप्रविष्टधर्म्मवत्वात्मकचतुर्थसम्बन्धोपि निवेश्यः। स्वमुखप्रविष्टधर्म्मवत्वञ्च—स्वघटकनिष्ठा या अवयवत्वव्याप्यधर्म्मावच्छिन्ना विशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वम्। तेन जराशब्दान्ते जरात्वातिदेशो न।

परेतु एकस्मिन् घटकत्वघटकव्यापकत्वसम्बन्धे सति घटित-

त्वघटकव्याप्यत्वसम्बन्धे सति व्यपदेशिवत्=पूर्वोक्तसम्बन्धद्वयविशिष्टवत् कार्य्यं भवति। तत्र यथा घटकत्वघटितत्वप्रयुक्तं कार्यं तथैकस्मिन्नपि सम्बन्धे सति भवतीति। असहायत्वनिवेशात् "निजौ चत्वार एकाच" इति भाष्यं सङ्गच्छते। शास्त्रीयत्वञ्च,शास्त्रसंकेतताऽवच्छेदकधर्म्मवत्वम्। अन्तत्वमादित्वञ्च, "येनविधिः" 'यस्मिन् विधिः" इति शास्त्रसंकेतितावच्छेदकत्वम्। एकाच्त्वस्य तत्त्वाभावेऽप्यतिदेशः अन्यदन्यत्र॥ इति॥३०॥

## ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

ग्रहणवत्प्रातिपदिकत्वञ्च, वर्णत्वव्याप्यधर्मेण साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वप्रयोजकत्वे सति उगित्त्वावच्छिन्नविषयत्वाप्रयोजकत्वम्। तेन "उगितश्च" (पा० सू० ६।३।४५) इत्यत्र न दोषः। तदन्तविधिरिति-सप्तमीसमासः। इति॥ ३१ ॥

## व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

*एकगोपूर्वादिति*। इदं न युक्तं—पूर्वत्वस्य वर्णान्तरसन्निधानसापेक्षत्वेनातिदेशालभ्यत्वात्। अत एव दधीत्यादौ इकारस्येकारपूर्वत्वातिदेशेन सवर्णदीर्घो न भवति। परिभाषार्थस्तु प्रातिपदिकेन स्ववृत्तिप्रातिपदिकत्वव्याप्यधर्म्मावच्छिन्नविषयताप्रयोजकपदघटितं यदन्तादिपदघटितम्पदं, तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयीभूतं प्रत्ययविशिष्टं कार्य्यं न व्यपदेशिवल्लभ्यते। प्रत्ययवै० स्वतादात्म्य-स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन। *पूर्वात्सपूर्वादिति*। इदं न युक्तं पूर्वत्वस्यातिदेशालभ्यत्वात्। पूर्वान्तादिनिरिति वक्तव्यम्॥ इति॥ ३२॥

## यस्मिन् विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

येनविधिरित्येतदपवादत्वादुत्सर्गसमानदेशा इतिन्यायेनाभेदेन विशेषणमिति लब्धम्। तथाचाल्बोधके सप्तम्यन्ते पदे ऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजके सति यत्कार्य्यन्तत्तदादौ। अर्थात्स्वविधायकशास्त्रघटकाभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकसप्तम्यन्तपदबोध्यालादौ भवतीत्यर्थः। *वाचनिकीति*। भाष्ये ज्ञापकं नोपन्यस्तमितिभावः। नतु ज्ञापकं नास्तीत्यर्थः। "न ल्यपि" (पा० सू० ६।४।६९)

इत्यस्य ज्ञापकत्वसम्भवात् । प्रदायच्छत्रमित्यादौ "आतोलोपं" ( पा० सू० ६ । ४ । ६४ ) इत्यस्याजन्ते इत्यर्थापत्त्या तुकः पूर्वमाकारलोपे ईत्वाप्राप्त्या निषेधस्य वैयर्थ्यात् ।

ननु वान्तोयीत्यादौ "अमिपूर्वः" ( पा० सू० १ । १०७ ) इत्यादाविव प्रत्ययावयवयकाराव्यहितपूर्वयोरोदौतोरित्यर्थः। नचोष्ट्रगोयुगमित्यादौ दोषः । औकारसाहचर्य्येणौकारस्यापि यकारघटितप्रत्ययाघटकस्यैव ग्रहणात्, इत्यादिरीत्या सर्वत्रैव दोषवारणम्भव इतिचेन्न । बहुषु स्थलेष्वनेकक्लिष्टकल्पनापेक्षया परिभाषास्त्रीकारस्यैवौचित्यात्। "एकहलादौ" ( पा० सू० ६ । ३ । ६९) इत्यादावादिग्रहणं स्पष्टार्थमेवेति । *सतिसप्तमीति* । न तु सप्तम्यर्थत्वेन शास्त्रप्रतिपादितार्थबोधिकैव सप्तमीति ।

*तीषसहेत्यादाविति* । तत्र हि ति–इति से–इति च सप्तम्यौ प्रथमार्थे । आर्धधातुकस्येत्यस्यैव वलादेरित्यस्यानुवृत्तिः । तकाराभिन्नो यो वल् सकाराभिन्नो यो वल् तदादेरार्धधातुकस्येत्यर्थ इत्युक्तम् । वस्तुतस्तु ति–इति से–इति स्वातन्त्र्येण भेदेन विशेषणत्वमङ्गीकृत्य तकाराव्यवहितपूर्वो य इषादिः ततः परस्यार्धधातुकस्येत्यादिरीत्याऽर्थो युक्तः । अन्यथानयैव रीत्या सर्वत्रापि निर्वाहे परिभाषाया निष्फलत्वापत्तिः ॥ इति ॥ ३३ ॥

## सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ ३४ ॥

यद्यपि द्वन्द्वमात्रे ऽविशेषेणोद्भूतावयवभेदविवक्षारूपेतरेतरयोगतिरोहितावयवभेदविवक्षारूपसमाहारयोः सत्वेन सर्वस्मादेव द्वन्द्वादेकवचनबहुवचनयोरुत्पत्तिः सम्भवति,तथापि उद्भूतावयवभेदकसमुदायबोधकानां दारादिशब्दानां तिरोहितावयवभेदकसमुदायबोधकानां वनादिशब्दानां लोके दृष्टत्वेन घटपटादिद्वन्द्वोऽपि एकविधसमुदायबोधक एव स्यादितीयं परिभाषा ।

अयम्भावः–लोकशब्द—सर्वशब्दयोः सर्वो लोकः सर्वे लोकाः इत्युभयविधप्रयोगस्यैकसमुदायबोधकस्थले दृष्टतया द्वन्द्वीभूतैकघटपटादिशब्देऽप्यविशेषेण द्वन्द्वविधानलब्धैवोभयविवक्षा परिभाषया बोद्धव्यत इति ॥ ३४ ॥

## सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥

अनुदात्तेत्त्वलक्षणानित्यत्वे "प्रतीपमन्य ऊर्मिर्युध्यतीत्यादिसिद्धिस्तु न शक्या, भाष्ये तस्या असत्त्वात् ॥ इति ॥ ३५ ॥

## प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

अनुकरणत्वं स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वम् ॥ ३६ ॥

## एकदेशविकृतमनन्यवत् ॥ ३७ ॥

कार्य्यकालपक्ष इति, उभयत इति च, प्राचीनमताभिप्रायेण। वस्तुतस्तु रामाविति नेदं परिभाषायाः फलम्। यथोद्देशपक्षे पूर्वजातपदसंज्ञयैव सिद्धत्वात्, अपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वमेव पदसंज्ञायाः प्रवृत्तेः। अत एवानुमानिकस्थान्यादेशभावमादायास्य न्यायस्यानाश्रयणं स्थानिवत्सूत्रे भाष्ये उक्तम्। अतो नैतस्याः फलमिति।

परिभाषार्थस्तु—स्वविशिष्टं स्वतो भिन्नं न भवतीति। वै० स्वघटकमात्रप्रतियोगिकविकारवत्त्व, स्वविशिष्टाघटितत्वोभयसम्बन्धेन। सम्बन्धघटकवै० स्वघटितत्व, स्वघटकमात्रोद्देश्यकविकारेतरत्वोभयसम्बन्धेन। निर्जरशब्दे जराशब्दवैशिष्ट्यवारणाय द्वितीयः सम्बन्धः। रामशब्दैकदेशविकृतत्वमेकादेशस्य न,तद्घटकमात्रोद्देश्यकत्वाभावात्। *प्राग्दीव्यत इति*।अत्रापि स्वांशे चारितार्थ्यचर्चा न कार्या। यदनुपपत्त्या यत्कल्पितं तेन तदुपपत्तिमात्रस्य ज्ञापनाऽपेक्षितत्वात्। अक्तपरिमाणत्वञ्च संख्यात्वपरिमाणत्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकाभावप्रतियोगित्वम्। व्यापकत्वघटकाधिकरणता च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नेति। गुडोदकमित्यादिभाष्यस्यैकदेशयुक्तित्वम् ॥ ३७ ॥

## पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥३८॥

स्पष्टार्था ॥३८॥

## पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

परे तु भिन्धीति भिन्तादित्यस्योपलक्षणम्। तत्र परत्वात्तातङि धिभावं बाधित्वा जाते धिभावस्याऽप्राप्त्या "तातङादेः स्थानिवत्वप्रतिषेधो वक्तव्य" इति वार्तिकस्य वैयर्थ्यमित्याशयकमवतरणमाहुः। प्रसङ्गेति लुप्तसप्तम्यन्तः। विज्ञानं शास्त्रप्रवृत्तिः। तथाच परत्वमूलकबाधस्थले स्वप्रवृत्तियोग्यातिरिक्तत्वेन पूर्वशास्त्रीयोद्देश्यता-

वच्छेदकावच्छिन्ने सङ्कोच इतिपरिभाषातात्पर्य्यम् ॥३९॥

## सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव॥४०॥

*तृजादिवदिति*। यद्यपि पर्य्यायेण प्रवृत्तिरित्यसङ्गतं, विधौ विधेयसंसर्गे वा क्लृप्तस्योद्देश्यतावच्छेदकव्यापकत्वस्य भङ्गापत्तेः। तथापि प्रकृतेऽन्यतरत्वावच्छिन्नव्यापकताया एव शास्त्रतात्पर्यविषयत्वात्। व्यापकताघटकाधिकरणस्यान्यतरानधिकरणस्यैव प्रकृते निवेशेन विधेयतावच्छेदकावच्छिन्नव्यापकताक्षत्यभावाच्च। *व्यक्तिपक्ष इति*। "त्रेस्त्रय" (पा०सू० ६।३।४८) इत्यादिशास्त्रघटकत्र्यादिपदानां त्रित्वाद्युपलक्षित तत्तद्व्यक्तित्वावच्छिन्ने शक्तिरिति,न शक्यतावच्छेदकत्ततद्व्यक्तित्वभेदेपि शक्तिभेदः, उपलक्षणीभूतधर्म्मस्यैक्यात्। अन्यतद्व्यक्तित्वावच्छिन्ने कार्य्यं न स्यादिति लक्षणोपप्लवः।

*यौगपद्येनासम्भव इति*। नत्वेकस्य कार्य्यं इत्यसम्भव एवेत्यर्थः। शिष्टादित्यत्र तातङ्शादेशयोरेकस्थानिकत्वाभावेपि यौगपद्यासम्भवाद्विप्रतिषेधशास्त्रप्रवृत्तिः। निमित्तवाचकपदानामावृत्त्या विधेयेपि विशेषणत्वेन तत्र निमित्तानन्तर्यबाधे विरोधः। वस्तुतस्तु निमित्तानन्तर्य्यस्य निशेषणदानेपि सुधी उपास्य इत्यादीनां सुद्ध्युपेत्याद्यादेशापत्तेः। "स्थानेऽन्तरतम" इत्यनेनैव वारणस्वीकारे निमित्तानन्तर्य्यं न तत्र विशेषणम्। विरोधस्तु—एकेन यस्य साधुत्वं बोधितमपरेण तस्यासाधुत्वमित्येवं रीत्योपपादनीयः॥

स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्तत्वेन च पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोच इत्यत्र परिभाषातात्पर्य्यम्॥ इति ॥ ४० ॥

## विकरणेभ्यो नियमो बलीयान्॥ ४१ ॥

*परत्वाद्विकरण इति*। खश्चानशादौ विकरणस्यावकाशः। लिङादौ नियमस्यावकाशः। पूर्वविप्रतिषेधेन तु न निर्वाहः। तस्य भाष्योक्तस्थल एव प्रवृत्तेः स्वीकारात्। सामान्यशास्त्रविहितानाम् "अनुदात्तङित" (पा० सू० १।३।५०) इत्यादिनियमेनेतरनिवृत्तिरितिपक्षे इदं बोद्धव्यम्। तिबादिविध्येकवाक्यतया नियमशास्त्राणां विधायकत्वमितिसिद्धान्तपक्षे तु लकारावस्थायां सार्वधातुकपरत्वाभावात् परत्वादिकरण इत्युक्तिरसङ्गता स्यात्। परत्वादिति नित्यत्वस्योपलक्षणमन्यथा तुल्यबलत्वाभावादसङ्गतं स्यादिति।

पक्षान्तरमाह *विकरणव्यवधानेऽपि* । अस्मिन्पक्षे परत्वस्यैव विप्रतिषेधशास्त्राबाधश्चेति लाघवम् । सिद्धान्तभूततृतीयपक्षमाह *वस्तुत इत्यादिना* । *शबादिभ्य इति* । तद्विना सार्वधातुकपरत्वाभावात् । विहितपञ्चम्यां गौरवादाह—*यद्वेति* । इदं न युक्तं । सामान्यापेक्षाद्विशेषापेक्षस्य बहिरङ्गमित्यस्य खण्डयिष्यमाणत्वात् ॥ इति ॥ ४१ ॥

## परान्नित्यं बलवत् ॥ ४२ ॥

स्वविशिष्टं शास्त्रं स्वापेक्षया बलवदित्यर्थः । कुत इति चेत्—स्वविशिष्टत्वात् । उभयत्र वैशिष्ट्यञ्च—स्वप्रवृत्तिप्राक्कालिकप्राप्तिकत्व—स्वप्रवृत्त्युत्तरकालिकप्राप्तिकत्व—स्वनिष्ठान्तरङ्गत्वानिरूपकत्व-स्वनिष्ठापवादत्वानिरूपकत्वैतच्चतुष्टयसम्बन्धेन । एवञ्च परस्याप्यनेनैव बलवत्त्वमित्यन्यत्र विस्तरः ॥ ४२ ॥

## शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥

स्पष्टम् ॥४३॥

## शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥ ४४ ॥

## लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥

## क्वचित्कृताकृतप्रसङ्गित्वमात्रेणापि नित्यता ॥४६॥

## यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४७ ॥

## यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४८ ॥

## स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४९ ॥

आसां सर्वासामर्था मूल एव सुस्पष्टाः ॥ ४४ । ४५ । ४६ । ॥ ४७ । ४८ । ४९ ॥

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

*असिद्धत्वादिति* ॥ इदं समकालप्राप्तबहिरङ्गत्वस्यासिद्धत्वपरं । जातबहिरङ्गापेक्षयाऽन्तरङ्गस्य बलवत्त्वबोधने फलाभावात् ।

*त्रयादेश इति* । त्रयादेशे त्रित्वम् । अर्थत्वमाम्संज्ञा । तिस्रादेशे त्रित्वं विभक्तिसंज्ञा इति धर्मत्रयनिमित्तकत्वं समानमधिकं स्त्रीत्वनिमित्तमिति तस्य बहिरङ्गत्वम् । अपरनिमित्तकत्वरूपान्तरङ्गत्वस्वीकारे मानं तु "अतोऽम्" ( पा० सू० ७ । १ । २४ ) इतिसूत्रे तपरकरणम् । तद्धि अश्वआश्चेति समाहारद्वन्द्वे आ-इत्यत्र प्रवृत्त्यभावाय । यदि तु तपरकरणं मुखसुखार्थं पूर्वोक्तसमाहारद्वन्द्वे अमित्येव भवतीति मन्यते, तदा अपरनिमित्तकत्वरूपान्तरङ्गत्वं मास्तु । गौधेर इत्यादिसिद्धिस्तु व्लोपेरित्यनेन वलिलोपेऽन्तरङ्गपरिभाषा न प्रवर्तते इति कल्पनया । वृश्चतीत्यादौ वलिलोपदृष्ट्या सम्प्रसारणासिद्धत्वप्रतिपादनपरभाष्यविरोधस्तु न, ज्ञातबहिरङ्गासिद्धत्वाभावस्यैव कल्पनात् ।

अन्तरङ्गत्वन्तु बहिरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकपदप्रयोज्यविषयताश्रयघटकवृत्तिविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितत्वम् । बहिरङ्गत्वन्तु—अन्तरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयघटितवृत्तिविषयताप्रयोजकपदघटितत्वम् । इदं जातासिद्धस्थले, समकालप्राप्तासिद्धस्थले चोभयत्रैव ॥ वस्तुतस्तु कृतितुग्ग्रहणं न परिभाषायां संज्ञाकृतबहिरङ्गत्वानाश्रये लिङ्गम् । नाजानन्तर्यपरिभाषासत्वात् ।

*अन्तरङ्गशास्त्रत्वमस्या लिङ्गमिति* । बहिरङ्गशास्त्रत्वं तु न लिङ्गं तस्य जातत्वे कर्तव्यत्वाभावेन प्रतिपादनवैयर्थ्यात् । तस्य त्रिपादीस्थत्वेऽपि अन्तरङ्गस्य सापादिकत्वे 'आगच्छ हे पयोद्' 'आगच्छ हे पयोद्' इत्येतत्सिद्ध्यर्थं परिभाषाप्रवृत्तेरिष्टत्वाच्च । तथाहि—अदतीत्यद्, पयस्यद् पयोऽद् । तत्र सम्बोधने वाक्यनिमित्तकः प्लुतो "दूराद्धूते च" ( पा० सू० ८ । २ । ८४ ) इत्यनेनाऽदोऽकारस्य, पयोदेत्यत्र पयस्द् (द्) इतिस्थिते संयोगात्पूर्वाऽकारस्य, "गुरोरनृत" ( पा० सू० ८ । २ । ८६ ) इति प्लुतो वाक्यनिमित्तको बहिरङ्गत्रैपादिकः अन्तरङ्गोत्वदृष्ट्याऽसिद्ध इति "अतोरोरप्लुतादप्लुते" ( पा० सू० ६ । १ । ११३ ) इति सूत्रविहितोत्त्वसिद्धिः ॥

बहिरङ्गशास्त्रत्वस्य लिङ्गत्वे तु प्लुतस्य बहिरङ्गस्य त्रिपादीस्थत्वेन सापादिकपरिभाषां प्रत्यसिद्धत्वेनाभावात्सिद्धत्वप्रतिपादनासम्भवेनोत्वानापत्तेः । "पूर्वत्रासिद्धम्" ( पा० सू० ७ । २ । १ ) इत्यनेन तु

नासिद्धत्वसिद्धिः । 'एहि सुस्रोता अत्र' इत्यादिसकललक्ष्य-प्राप्तस्य तस्याप्लुतादप्लुत इत्येतत्सामर्थ्येन बाधादित्यन्यत्र विस्तरः । अङ्गविशेषणत्वे सार्वधातुकाद्यव्यवहितपूर्वाङ्गावयवत्रस्येको गुण इत्यर्थः । जातासिद्धत्वे ऊठग्रहणं ज्ञापकम् । समकालप्राप्तासिद्धत्वे "ओमाङोश्च" (पा० सू० ६ । १ । ८५ ) इत्याङ्ग्रहणं ज्ञापकम् ।

जातबहिरङ्गासिद्धत्वफलं नौशब्दस्य अशब्देन समासे नावशब्दादाचारक्विबन्ताण्णाल्लोपे नावयतीत्यत्रोठोऽभावः । अल्लोपस्य स्थानिवत्वं तु न क्वौ विधिं प्रति निषेधात् । समकालप्राप्तासिद्धत्वफलं तु अबिभयामित्यत्र अभी—अम् इति स्थिते परमपि गुणम्बाधित्वा श्लुनिमित्तके द्वित्वेऽन्तरङ्गत्वात्पूर्वं कृतेऽभ्यासे इकारश्रवणम् । निगाल्यत इत्यत्र पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वम् । साधनबोधकशब्दनिमित्तककार्य्यापेक्षया उपसर्गार्थनिमित्तककार्य्यस्य शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वम् । उपसर्गसंज्ञकशब्दमात्रनिमित्तककार्य्याणां बहिरङ्गत्वम् ॥ इति ॥ ५० ॥

## नाजानन्तर्य्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

*जातस्याबहिरङ्गस्येति* । नन्वेवमधि-इ—त्वा—इति स्थिते "अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधत" इति पूर्वं ल्यपि समकालमेवैकादेशतुकोः प्राप्त्या, जातबहिरङ्गाभावेन परिभाषाया अप्राप्त्या तुकः स्वांशे चारितार्थ्याभाव इति चेन्न । अन्तरङ्गनिमित्तविनाशकल्यप एव तया प्राबल्यबोधनात् इति । *अत एव "अचः परस्मिन्नि इति* । नन्वत्र तस्याः सत्वेऽपि न दोषः । समकालप्राप्तत्वादितिचेन्न । परिभाषास्वीकारपक्षे जातत्वनिवेशः । तदपेक्षया बहिरङ्गपरिभाषाया अनित्यत्वेनैव सकलातिप्रसङ्गभङ्ग इति भावः । 'पपुषः' इत्यादावननुगतानित्यत्वस्वीकारेऽपि बहुषु स्थलेषु अनुगताऽनित्यत्वस्वीकारे बाधकाभावात् । "नासूया कर्तव्या यत्रानुगमः क्रियते" इति भाष्योक्तेः परिभाषाकर्तव्यैवेति परे ॥ इति ॥ ५१ ॥

## अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते ॥ ५२ ॥

ननु गोमत्-सु प्रिय-सु इति दशायां लुकोऽप्राप्त्याऽन्तरङ्गत्वादित्यसङ्गतम् । नच लुक्पदं तत्प्रयोजकसमासोपलक्षणमिति वाच्यम् । तस्याप्यन्यपदार्थान्तर्भावेण वृत्तिकल्पनोत्तरमेव प्रवृत्तेरितिचेन्न । अ-

प्राप्तिमत्वरूपबहिरङ्गत्वस्य सत्त्वेनादोषात् ।

*हल्ङ्यादिलोप इति* । यद्यपि पुनः परत्वादिदमुक्तं तथापि अपरनिमित्तकत्त्वेन लोपस्याऽन्तरङ्गत्वं बोध्यम् । *नुमादय* इति । यद्यपि पूर्वं नुम्यच उपधात्वाभावेन निरवकाशत्वात्पूर्वं दीर्घ एव स्यात्तथापि उपाधापदस्य पूर्वमात्रोपलक्षकत्वेन नुमुत्तरं दीर्घस्य सावकाशत्वेन नित्यत्वान्नुम् । *अन्तङ्गानपीति* । अपिशब्देन परनित्ययोः संग्रहः, नत्वपवादस्य, तस्य निरवकाशत्वेन प्राबल्यात् । *तवममादिबाधनार्थमिति* ।

ननु युष्मद् अस् अस्मद् अस् इत्यादौ बाधकस्यापि "प्रत्ययोत्तरपदयोश्च" ( पा० सू० ७ । २ । ९८ ) इति सूत्रस्य विभक्त्या व्यवधानेन प्राप्त्या तव ममादिप्रवृत्तिरव्याहतैव । विभक्तेरपि प्रत्ययत्वात्तामादाय प्रत्ययोत्तरपदयोरिति प्रवर्तेत इति तु न । उत्तरपदसाहचर्येण वृत्तिचरमावयवस्यैव प्रत्ययस्य ग्रहणात् । अन्यथा त्वया इत्यादावपि इदमेव स्यादितिचेन्न । उपसञ्जनिष्यमाणन्यायेन प्रक्रियादशायामपि प्रत्ययोत्तरपदयोरित्यस्य तव ममादिबाधकत्वात् । नच सूत्रस्य मपर्यन्तानुवृत्तेर्वा न स्वांशे चारितार्थ्यम् । "त्वमावेकवचने" (पा० सू० ७।२।९७) इत्यत्र विभक्तेरननुवृत्त्यैव त्वत्कृतमित्यादौ परिभाषया पूर्वं ङसो लुकि बाधकस्यापि तवममादिशास्त्रस्याप्रवृत्या, त्वत्पुत्र इत्यादौ च त्वमादेशसिद्धेरिति वाच्यम् । त्वं सुन्दरः पुत्रो यस्येति त्रिपदबहुव्रीहौ युष्मत्सुन्दरपुत्र इत्यादौ त्वमादेशापत्तेः । *संपूर्णसूत्रज्ञापकतेति* । तद्भाष्यघटितघटकमपर्यन्तानुवृत्तिज्ञापकतापरभाष्यप्रामाण्यादित्यर्थः । तेन आचार्यक्विपि न दोषः ।

*अत एव तस्मिन्नणिचेति* । ननु उत्सर्गसमानेति न्यायज्ञापनात्पूर्वं मपर्यन्तानुवृत्तिवैयर्थ्याभावेन युवयोरयमितिविग्रहे युष्मद् ओस्-ईन इति स्थिते विभक्तिव्यवधाने युष्माकादेशाप्रवृत्याऽन्तरङ्गत्वाद् विभक्तिनिमित्तकयुवादेशे विभक्तिलुकि स्थानिवद्भावेन युष्माकादेशे यौष्माकीण इति । आकडि तु यौवाकीन इति फलभेदात्कथं ज्ञापकत्वम् ।

किञ्च फलभेदाभावे युष्माकादेशस्य वैयर्थ्यम्, वैयर्थ्ये न्यायः, न्याये मपर्यन्तानुवृत्तिवैयर्थ्यं, वैयर्थ्ये चाऽन्तरङ्गानपीतिन्यायः, न्याये विभक्तिलुकि युवादेशाभावे आकडादेशेन फलभेदाभावाद् वैयर्थ्यमिति चक्रकमितिचेन्न । तद्धितनिष्ठसिद्धे

विधेयतानिरूपितोद्देश्यतावच्छेदकधर्मावच्छिन्नोद्देश्यताककार्ये कर्त्तव्ये विभक्तेरविद्यमानवद्भावः(१)कल्प्यते । उत्सर्गसमानेति तत्र स्विक्रियते, यत्रापवादे उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकाधिकरणपर्याप्तोद्देश्यतावच्छेदकत्वम् । तेनाजादेर्द्वितीयस्येत्यादौ न दोषः। इति॥५२॥

## पूर्वोत्तरपदनिमित्तकार्यात् पूर्वमन्तरङ्गोऽप्येकादेशो नेति ॥ ५३ ॥

ताद्रूप्यञ्च एकादेशस्थानिविशिष्टवर्णमात्रवृत्तिधर्मघटितत्वम् । वै० स्ववृत्तित्व-स्वस्थानिकावृत्तित्वोभयसंबन्धेन । परिभाषायां पूर्वपदमुत्तरपदञ्च स्ववृत्तिवस्तुसन्निमित्तं, न तु पूर्वपदत्वोत्तरपदत्वाभ्यां कार्यीर्यनिमित्ततायामाग्रहः । तेन परमाहमित्यादौ एकादेशात्पूर्वमेव "त्वाहौ सौ"(पा०सू०७।२।९४)इति भवति । एकादेशपदेन च सन्धिमात्रमुच्यते । तेन रात्रिमट इत्यादौ मुमः पूर्वमन्तरङ्गोऽपि यण् नेति॥५३॥

## अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते ॥ ५४ ॥

स्पष्टार्था ॥ ५४ ॥

## वार्णादाङ्गं बलीयः ॥५५ ॥

दीर्घे कर्त्तव्ये द्वित्वस्य न बहिरङ्गासिद्धत्वं नाजानन्तर्ये इति निषेधात् । *अन्तरङ्गत्वादिति* । वृद्धिगुणापेक्षयेतिशेषः । अत्र नाजानन्तर्ये-इति न । तस्य जातासिद्धत्वविषयकत्वात् । पूर्वोक्तान्तरङ्गत्वलक्षणे विषयताप्रयोजकपदस्य सप्तम्यन्तपञ्चम्यन्तेतरस्यैव ग्रहणेन वृद्धिगुणयोरन्तरङ्गत्वम् । वार्णादित्यस्य वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यकादित्यर्थः। आङ्गमित्यस्य अङ्गत्वावच्छिन्नोद्देश्यकमित्यर्थः ।

*अभ्याससम्बन्धिनिमित्तकत्वादिति* । अभ्याससम्बन्धीभूतसमुदायाङ्गनिमित्तकत्वादित्यर्थः । दीर्घापेक्षया इयङुवङोरन्तरङ्गत्वं न शङ्क्यम् । स्वप्रयोज्यविषयताश्रयघटकत्व-स्वघटकपदप्रयोज्यविषयतापर्याप्त्यनधिकरणत्वोभयसम्बन्धेन बहिरङ्गशास्त्रघटकपदविशिष्टवृत्तिविषयताप्रयोजकसप्तम्यन्तपदघटितत्वरूपान्तरङ्गत्वस्वीकारात् । इ-इ-अतुस्-इति दशायां प्रतिपदविधित्वाद् "दीर्घ इणः किति" (पा० सू० ७ । ४ । ६९ ) इत्यभ्यासदीर्घे उत्तरखण्डस्य यणश्च स्यानिवत्वेन प्राप्तयङो निवृत्त्यर्थमसवर्णग्रहणमस्तु इति न वाच्यम् । तकन्यायेन इयङ् बाधित्वा जाते-दीर्घे इयङ्प्रवृत्तेः । *इयतीत्या-

---

(१) बकालतनेष्वित्यनेन ज्ञाप्यते।

द्विसकलेति* । पूर्वं यणप्राप्तिः । प्रतिपदविधित्वाद् गुणात् पूर्वं श्नुः, ततस्तस्मादेव श्लाविति द्वित्वम् । ततोऽनैमित्तिकत्वेन सर्वापेक्षया ऽन्तरङ्गत्वाद् अभ्यासविकारे (१)बाध्याः पूर्वमितिन्यायेन इवापेक्षया च पूर्वमुदत्वे प्रतिपदविधित्वेनेत्वे यणप्राप्तिः। यद्यपि ऊखतुरित्यादिरूपलक्ष्ये सकललक्ष्यप्राप्तदीर्घापवादत्वेन प्राप्तस्योवङोऽप्रवृत्तयेऽसवर्णग्रहणमावश्यकं, तथापि "अभ्यासस्यानौ" इति न्यासेनैव तत्सिद्धिरित्याशयः। *रूपातिदेशेनापहारे इति* । रूपातिदेशस्थले तद्रूपविशिष्टादेश एव तात्पर्यम् ।

समानकार्यित्वञ्च वार्णशास्त्रीयस्थानितावच्छेदकपर्याप्त्यधिकरणपर्याप्तस्थानिताकत्वं । कार्यित्वं विहाय स्थानित्वनिवेशफलन्तु उरुच्छतीत्यादौ अन्तरङ्गत्वात् तुकि लघूपधत्वाभावेन गुणाभावः अस्याप्रवृत्तेः। *स्योन इति* । अनित्यत्वे बीजं सतुकग्रहणं, तस्य यदि तुकशकारयोः समानकार्यित्वाभावेन चारितार्थ्यं तदा "अन्तुन्तरङ्गत्वाद् यणो गुणबाधकत्वमिष्यते" इति भाष्यमेवानित्यत्वे मानम् । अनित्यत्वेनैव सिद्धे समानस्थानिकत्वविषयकत्वकल्पनन्तु असमानस्थानिकत्वेनाप्रवृत्तिस्थलानामनुगमे लाघवार्थम् ।

परेतु आङ्गशास्त्रविशिष्टत्वं वार्णशास्त्रे समाननिमित्तकत्वम् । वै० स्वीयस्थानितापर्याप्त्यधिकरणवृत्तित्व-स्वघटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटकवृत्तित्वान्यतरसम्बन्धेन, सूत्रविशिष्टविषयताप्रयोजकसप्तम्यन्तपदघटित्वसम्बन्धेन । तथाच न कोऽपि दोषः। *अरियियादिति* । यदि त्वन्तरङ्गत्वाद् रिङादेशात् पूर्वमेव इयङित्युच्यते तदा प्रतिबन्धकीभूतत्वं न देयम् । अभ्यासकार्येत्यनुक्तौ तु निन्यतुरित्यादौ अनेन निषेधादुत्तरखण्डाजादेशस्थानिवद्भावानापत्त्या "अनिदिताम्" (पा० सू० ६।४।२४) इति नलोपापत्तिः। उत्तरखण्डनिवेशाद् 'वव्रश्च' इत्यत्राभ्यासकार्ये सम्प्रसारणनिषेधे कर्तव्येऽभ्यासावयवोरदत्वस्य स्थानिवद्भाव इति ॥ ५५ ॥

## अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

*तद्द्वारैव तन्निमित्तविनाशेति* । निमित्तविशिष्टो विनाशो निमित्तविनाशः । वै० स्वप्रतियोगिकत्व-स्वस्थानिकादेशप्रतियोगिकत्वे-

(१) "अभ्यासविकारे बाध्यबाधकभावो नास्ति" इति न्यायाकारः।

तदन्यतरसम्बन्धेन। *बहिरङ्गतया वृद्धेरसिद्धत्वान्नेति*। यद्यपि जातस्य समकालप्राप्तस्य नाऽसिद्धत्वं बहिरङ्गपरिभाषया बोध्यते इति दीर्घापेक्षया वृद्धेरसिद्धत्वासम्भवस्तत्काले तस्या अप्राप्तेस्तथापि, अन्तरङ्गप्रवृत्तिप्रतिबन्धकतयोपस्थितत्वात् समकालत्वं बोध्यम्। किञ्चान्तरङ्गनिमित्तविनाशनिमित्तकत्वेनान्तरङ्गदेशस्थत्वेन परिभाषाप्यन्तरङ्गा। तद्दृष्ट्यैव च तत्समकालप्राप्ताया वृद्धेरसिद्धत्वेन परिभाषाया अन्तरङ्गनिमित्तविनाशज्ञानाभावात् न प्रवर्तेत सा इति बोध्यम्। एतद्विषये=परिभाषारूपान्तरङ्गे कार्ये।

*निमित्तविनाशसंभावनेति*। यद्यन्तरङ्गं पूर्वं न प्रवर्तेत तदा बहिरङ्गेणान्तरङ्गनिमित्तविनाशः स्यादिति संभावना। *सावुत्थितिर्माभूदिति*। अस्मिन् मते निमित्तस्य विनाशे तत्प्रयुक्तकार्यविशिष्टस्य स्थाने तत्कार्यरहितस्वरूपातिदेशोऽनया बोध्यते। तेन सूत्थितादिष्वि वृद्धावपि न तया तन्निमित्तविनाशः, किन्तु दीर्घेणैव स्वनिमित्तविनाशः। किञ्च दीर्घविनाशेऽपि देवदत्तहन्तृहतन्यायेनोकारश्रवणमनुपपन्नमित्यादिशङ्का दूरीकृता।

*समर्थानामितीति*। कृतसन्धिकार्यादेव प्रत्ययस्थितिरिति बोधनेनास्या अप्रवृत्तिः। *प्रतिपदविधित्वादिति*। प्रतिपदोक्तत्वादित्यर्थः। "वस्वेकाच्" (पा० सू० ७।२।६०) इत्यस्येड्विधायकत्वेन प्रतिपदोक्तत्वन्तु न तस्य नियमत्वेन "आर्धधातुकस्येड्वलादेः" (पा० सू० ७।२।३५) इत्यस्यैव विधायत्वात्। निषेधमुखेन प्रवृत्तिमवलम्ब्य प्राचीनमतेन प्राचीनाभिमतपरिभाषाखण्डनात्। पूर्वमिडागमे सम्प्रसारणे यणि सम्प्रसारणस्यासिद्धत्वाद्यलोप इति न वाच्यम्। नाजानन्तर्ये इतिनिषेधात्। अन्तरङ्गे कर्तव्ये कृते चेति तदर्थात्।

यदि तु समर्थग्रहणेन अकृतव्यूहपरिभाषा ज्ञापिता, सा तद्धितविधौ न प्रवर्तते इत्येव तेन बोध्यते। ततश्चान्तरङ्गत्वादेवैकादेशो 'वैक्षमाणिः' इत्यत्रेति युक्तं तदुदाहरणत्वमस्य। वार्णपरिभाषा तु अकृतव्यूहरूपैव। 'पपुष' इत्यादौ च सम्प्रसारणेन वलादित्वरूपनिमित्तविनाशे भाविनि पूर्वमिटोऽप्रवृत्तेः। सम्प्रसारणे कृते तन्निमित्तक एवातो लोपो वाच्यः। सम्प्रसारणस्यासिद्धत्वे स न स्यादिति युक्त एव परिभाषायां सत्यां वार्तिकारम्भः। प्रतिषेधश्च नापूर्वः

किन्तु परिभाषालभ्य एवातो न प्रत्याख्यातः।

प्रकृतिप्रत्यापत्तिवचनेनास्या अनित्यत्वेन वाञ्छधातोः क्विपि शादेशाभावाय च यत्नावश्यकत्वं, न तु परिभाषाया अभावेन। "प्रत्ययोत्तरपदयोः"(पा० सू० ७।२।९८) इति "अदोजग्धिः" (पा० सू० २।४।३६) इत्यनयोश्चाकृतव्यूहपरिभाषाज्ञापनद्वारैव परिभाषाद्वयज्ञापकता भाष्याभिप्रेता। अकृतव्यूहा इत्यानुपूर्व्या भाष्येऽदर्शनेऽपि 'अन्तरङ्गानपि' इ यादिरूपेणोपलभ्यते एव। कैयटवचनमपि स्वरूपतोऽनाश्रयणमात्रपरमित्युच्यते तदा परिभाषा युक्तैव। एवं सत्यन्तरङ्गानपीति परिभाषाद्वयमनेकत्रानेकक्लिष्टकल्पनञ्च नाश्रयणीयम्॥ इति॥ ५६॥

## अन्तरङ्गादप्यपवादोबलीयान्॥ ५७॥

## येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति॥ ५८॥

दार्ढ्यं-व्यापकत्वमेव। प्राप्तौ प्रथमं विशेषपदं बाधकपरं, द्वितीयं व्याप्यपरम्। सामान्यपदं तु व्यापकपरम्। विशेषधर्मावच्छिन्नवृत्तित्वं सामान्ये येन केनापि सम्बन्धेन नतूद्देश्यतावच्छेदकतावच्छेदकसम्बन्धेनैवेत्याग्रहः। तेन प्रथमैकाच्त्वस्य द्वितीयैकाचि स्वरूपसम्बन्धेनाभावेऽपि स्वघटकाच्त्ववदुत्तरत्वसम्बन्धेन वृत्तित्वं बोध्यम्। स्वावच्छेदकव्याप्यधर्मावच्छिन्नातिरिक्तवृत्तित्वस्य व्यापकधर्मावच्छिन्नविषयतायां बोधनं बाधः। तक्रकौण्डिन्यन्यायमूलकोऽयं न्यायः, बाध्यबाधकयोरेकप्रकरणस्थत्वं यत्र, तत्रैव। तत्त्वञ्च यत्किञ्चिदनुगतरूपावच्छिन्नस्य प्रतिपाद्यत्वेन विषयत्वं यस्यामिच्छायां तत्प्रयोज्यकृतिविषयत्वम्। भवति च वर्णद्वित्वप्रतिपादनविषयकमहेच्छापूर्वकावान्तरेच्छाधीनकृतिगोचर "अचोरहाभ्याम्" (पा०सू० ८।४।४६) इत्यारभ्य "दीर्घादाचार्याणाम्" (पा०सू०८।४।५२) इत्यन्तसूत्रवार्तिककदम्बस्येति तद्धटकयर्णपदयोः रेफेतरस्वार्थपरता।

स्वीयविषयताविशिष्टधर्मवद्विषयताकशास्त्रस्य स्वेन बाधः। वै०स्वव्यापकतावच्छेदकत्व स्वावच्छेदकोपधात्वावच्छिन्नविषयतागततद्व्यक्तित्वविशिष्टभिन्नत्वोभयसम्बन्धेन। उभयत्र वै० स्वव्यापकत्वस्वभिन्नत्व-स्वव्यापकाव्यापकत्व-स्वसमनियतोभयावृत्तिधर्माश्रयवि-

षयत्वाव्याप्यवृत्तित्वैतच्चतुष्टयसम्बन्धेन । यत्रान्यतरत्वादिना बाधः, तत्र बाध्यसामान्यचिन्ता । यत्र तद्व्यक्तित्वेन बाधस्तत्र बाध्यविशेषचिन्ता । मध्येऽपवादन्यायपुरस्तादपवादन्यायौ च पूर्वोक्तबाधबीजवर्णनेन गतार्थौ ।

व्यापकत्वं बाध्यताबीजमुक्त्वा तत्र बाधकताबीजं व्याप्यत्वमाह-*तद्प्राप्तीति* । स्वप्रवृत्त्युत्तरोत्सर्गशास्त्रप्रवृत्तिसंभावनाप्रयोज्यवैयर्थ्यसंभावनाविषयत्वाभावे सति तद्प्राप्तियोग्येऽचरितार्थत्वे सति कृतेऽप्यचरितार्थत्वं यत्र तत्र(१)स्वप्रवृत्तियोग्यातिरिक्तत्वेन संकोचः । तदप्राप्तियोग्येऽचरितार्थत्वे सति कृते चारितार्थ्यं यत्र, तत्र स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्याश्रयातिरिक्तत्वेन च संकोचः । आमो धर्मत्रयसत्त्वादेकरूपेणैव संकोचः।अमादेशे त्रितयाभावसत्त्वादुभयरूपेण संकोचः । तद्व्याप्यत्वमात्रस्य बीजत्वादेवेति 'अत एव'इत्यस्यार्थः । अत्र बाध्यबाधकभावे, कृते चारितार्थ्येऽपि व्याप्यत्वं बाधकताबीजमस्तीति भावः ।

*विषताभेदेऽपीति* । सजातीययोरेव बाध्यबाधकभावः । एवं सति एककालिकयोरेव बाध्यबाधकभावः । अत एव "ब्राह्मणेभ्यो दधि दीयतां कम्बलं कौण्डिन्याय"इत्यत्र न बाधः । दधितक्रयोस्तु रुच्युत्पादकत्वेन साजात्यमस्त्येवेति दिक् ॥ ५७ ॥ ५८ ॥

**क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते ॥ ५९ ॥**

इदं नापूर्वम्, किन्तु येन नाप्राप्तिन्यायस्यैवैकदेशमनूद्य संकोच विशेषः प्रतिपाद्यते ।*सर्वथाऽनवकाशत्वादिति*।*क्वचिदपवादेति*। स्वप्रवृत्तियोग्यातिरिक्तत्वफलित एवायम् । क्वचिदित्यस्य सर्वथाऽनवकाशस्थले इत्यर्थः । "गुणो यङ्लुकोः" (पा० सू० ७ । ४ । ८२) इतिसूत्रस्थभाष्यादपवादशब्दस्य कृते चारितार्थ्ये सति यो बाधकस्तत्परत्वमाशङ्क्याह *बाधक पर इति* । *चरितार्थविषयताया इति* । तेन न्यायेनापि चारितार्थ्यविषये यो बाधकस्तत्रैवाऽपवादत्वस्य पूर्वं प्रतिपादितभाष्येण लाभात् । *शेषिकोऽणिति*। "वृद्धाच्छः" (पा० सू०४।२।११४) इतित्वधिकारविषयो, न तु विधिसूत्रविषय इति भावः । *यद्युदाहरणमस्तीति* "अकः सवर्णे दीर्घः" (पा० सू०

(१) अन्यत्र बाधस्थलेऽपि ।

६।१।१०१ ) 'गुणदीर्घोत्त्वानामपवाद' इत्याद्युदाहरणं बोध्यम् ॥ ५९ ॥

पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ॥ ६० ॥

मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान् ॥ ६१ ॥

अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६२ ॥

पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६३ ॥

प्रकल्प्य चापवाद विषयं तत उत्सर्गोऽभिनिविशते ॥ ६४ ॥

आसां स्पष्टा एवार्थाः । शिष्टमितरत्र द्रष्टव्यम् ॥६०।६१।६२।६३।६४।

उपसंजनिष्यमाणनिमित्तो ऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधते ॥ ६५ ॥

यत्रापवादेन स्वप्रवृत्तियोग्यातिरिक्तत्वेनोद्देश्ये संकोचेऽप्यपवादस्य वैयर्थ्यमेव, तत्रोत्सर्गशास्त्रप्रवृत्त्यभावसंभावनाप्रयोज्यस्वप्रवृत्तिसंभावनाविषयातिरिक्तत्वेनापि संकोच इति तत्त्वम् । अत्रापवादपदेन निषेधपर्युदासापवादाः सर्वे गृह्यन्ते ॥ ६५ ॥

अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६६ ॥

अपवादत्वे व्याप्यविषयतया व्यापकविषयतायां संकोचेनावर्णे सवर्णाजव्यवहितपूर्वागितरत्वेन, अचि वा अगव्यवहितोत्तरत्वविशिष्टसवर्णाज्भिन्नत्वेन संकोचे ऽपि 'अयजे इन्द्रम्' इत्यादौ गुणप्रवृत्तिरव्याहतैव ॥ इति ॥ ६६ ॥

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६७ ॥

*अकिद्ग्रहणमस्याज्ञापकमिति* । यद्यपि तुकः प्रागकितोऽभ्यासस्य सत्वाद्दीर्घो दुर्वारस्तथापि—उपसंजनिष्यमाणन्यायेन यदि दीर्घो न स्यात्तदा, तुकिऽकिदिति निषेधः स्यादिति संभावनया पूर्वं दीर्घाप्राप्तिर्बोध्या । सर्वेषां प्रवृतियोग्यतेति कैयटाशये तु न दोषः ॥ इति ॥ ६७ ॥

ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ ६८ ॥

क्तल्युट् तुमुन् खलर्थेषु वासरूपविधिर्नास्ति ॥ ६९ ॥

लादेशेषु वासरूपविधिर्नास्ति ॥ ७० ॥

उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७१ ॥

आसामपि पूर्वोक्ता गतिर्वेदितव्येति ।।६८ । ६९ । ७० । ७१॥

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति॥७२॥

प्रातिपदिकत्वावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताभिन्नविषयताप्रयोजकत्वस्य प्रातिपदिकग्रहणत्वरूपत्वम् । स्वविशिष्टे स्ववृत्तीनां वर्णत्वव्याप्यधर्माघटितधर्माणामारोपोऽनया बोध्यते इति । वै० स्वनिष्ठावयवतानिरूपकत्व-स्वविशिष्टोद्देश्यतानिरूपितविधेयताश्रयीभूतलिङ्गबोधकप्रत्ययनिष्ठचरमावयवतानिरूपकत्वोभयसम्बन्धेन । वै० स्वपर्याप्तत्व,-स्वघटितपर्याप्तत्वान्यतरसम्बन्धेन ॥ ७२ ॥

विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७३ ॥

सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७४ ॥

नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः॥ ७५ ॥

इमा अपि तथा ॥ ७३ ॥ ७४ ॥ ७५ ॥

गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥ ७६ ॥

तत्त्वन्तु-समकालिकापवादविषयत्वेन संकोचेऽपि यत्रापवादस्य वैयर्थ्यमेव, तत्रैवोपसंजनिष्यमाणन्यायः । यथा दधतीत्यादौ । प्रकृते समकालिकापवादविषयातिरिक्तत्वेन संकोचे वृषलीत्यादौ "जातेरस्त्रीविषयाद्" (पा० सू० ४।१।६३) इत्यस्य चारितार्थ्यान्न न्यायप्रवृत्तिरिति सम्यगेवावतरणम् ॥ इति ॥ ७६ ॥

साम्प्रतिकाभावे भूतपूर्वगतिः ॥ ७७ ॥

बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥

इमेऽपि पूर्वोक्तवत् ॥ ७७ ॥ ७८ ॥

चानुकृष्टं नोत्तरत्र ॥ ७९ ॥

इयं परिभाषा व्यवहितसूत्रस्थचकारविषयिणी । चकारप्रत्याख्यानभाष्यन्तु-अव्यवहितसूत्रस्थचकारविषयकं । न तेन विरोध इति बोध्यम् ॥ इति ॥ ७९ ॥

**स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥**

स्वरत्वव्याप्यधर्मघटितधर्मावच्छिन्नोद्देश्यदलीयविषयतायाः, प्रतिबन्धकत्वं व्यञ्जनस्य नेति परिभाषार्थः। तेनोदश्विच्छब्दस्यान्तोदात्तत्वेऽपि ह्रस्वान्तत्वावच्छिन्नविषयताप्रतिबन्धकत्वं तकारस्यास्त्येव। उदात्तान्तत्वोदात्तादित्वघटकवर्णे व्यञ्जनातिरिक्तत्वं देयमित्यत्रैव परिभाषातात्पर्यम् ॥ ८० ॥

**हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥**

स्वनित्तविनाशं विना यस्य न चारितार्थ्यं, तेनैव स्वनिमित्तविनाशो न दोषाय। चारितार्थ्ये तु दोष एव। "यतोऽनाव" (पा० सू० ६। १। २१३) इति सूत्रस्याजादौ चारितार्थ्यम् ॥ ८१ ॥

**निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८२ ॥**

**तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणम् ॥ ८३ ॥**

**क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ॥ ८४ ॥**

**समासान्तविधिरनित्यः ॥ ८५ ॥**

अमूषामर्थाः परिभाषेन्दौ द्रष्टव्या। अविशिष्टत्वान्न लिख्यन्ते ॥

**सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥**

*षट्संज्ञा प्राप्नोतीति*। विभक्तिसापेक्षनुमो बहिरङ्गासिद्धत्वं तु न। संज्ञाया विधिनिमित्तनिमित्तकत्वेन समत्वात्। अकृतव्यूहपरिभाषया नुम् न स्यादिति तु न। असत्त्वात्। एतद्दोषवारणायैव सन्निपातपरिभाषाया आवश्यकत्वाच्च। *तुक्यजन्तविघात इति*। यदागमन्यायेन तुग्विशिष्टस्याजन्तत्वं तु न, वर्णग्रहणे तस्याप्रवृत्तेः। एकदेशयुक्तित्वं साधयति *किञ्चैवं शैव इति*। *यथा कथञ्चिदिति*। नाजानन्तर्यपरिभाषा स्मरणात्प्रागित्यर्थः। शास्त्रस्य प्रवृत्तौ निवृत्तौ वाऽतिदेशस्थलानुरोधेन निमित्तौ बुद्धिरेवापेक्षिता, इत्यज्ञातस्य स्वरूपसतस्तद्विघातस्याऽकिञ्चित्करत्वमित्यरुचेराह *किञ्चेति*।

ननु ङेर्य इत्यस्य जातत्वेऽपि न क्षतिः। तं प्रत्यसिद्धत्वबोधना-

भावात् (१)। परिभाषया हि सन्निपातलक्षणे कार्ये स्वनिमित्तविघातकशास्त्रं प्रत्यनिमित्तत्वं बोध्यते। सन्निपातलक्षणविधित्वस्य परिभाषालिङ्गत्वेन "ङेर्य" (पा॰ सू॰ ७।१।१३) इतिसूत्रस्थत्वेन तन्निमित्तनिमित्तकत्वेनान्तरङ्गा परिभाषा, तां प्रति दीर्घस्यासिद्धत्वादत आह-*किञ्चेति*।

-ननु सन्निपातलक्षणविधेस्तद्विघातकं प्रत्यनिमित्तत्वे ऽपि तद्विघातशास्त्रस्य स्वीयोद्देश्यतावच्छेदकज्ञानात् प्रवृत्तिरव्याहतैव। तया तत् प्रति कस्याप्यर्थस्याबोधनात्। अत्राहुः-सन्निपातलक्षणविधित्वं नास्या लिङ्गम्। अपि तु तद्विघातकत्वमेवेति। अस्या ज्ञापकं "न तिसृ" (पा॰ सू॰ ६।४।४) इतिसूत्रम्। अत्र तिस्रादेशो ङीपो निमित्तं नेति॥८६॥

संनियोगशिष्टानामन्यतरापाये उभयोरप्यपायः॥८७॥

समुच्चयेन विहितघटकयोरन्यतरस्यापाये सम्भाविते तदुभयोरप्यनुत्पत्तिः कर्तव्येति परिभाषार्थः। अन्यतरस्य प्रधानस्य निवृत्तौ तदितरस्याप्रधानस्य निवृत्तिरित्यर्थो वा। तेन 'फौह्लिः' इत्यादि सिध्यतीति॥ ८७॥

ताच्छीलिकेणेऽणकृतानि भवन्ति॥ ८८॥

धातोः कार्यमुच्यमानं तत्प्रत्यये भवति॥ ८९॥

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते॥ ९०॥

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य॥ ९१॥

प्रकृतिग्रहणेण्यधिकस्यापि ग्रहणम्॥ ९२॥

अङ्गवृत्ते पुनर्वृत्तावविधिः॥ ९३॥

संज्ञापूर्वकाविधेरनित्यत्वम्॥ ९४॥

आगमशास्त्रमनित्यम्॥ ९५॥

गणकार्यमनित्यम्॥ ९६॥

अनुदात्तेत्वलक्षणमात्मनेपदमनित्यम्॥ ९७॥

नञ् घटितमनित्यम्॥ ९८॥

---

(१) अपि तु परिभाषां प्रति दीर्घस्य तत्वं बोध्यते, तस्याश्च जातत्वाभावात्।

आतिदेशिकमनित्यम् ॥ ९९ ॥

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥१००॥

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ १०१ ॥

विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०२ ॥

आसामप्यर्था मूल एवापेक्षितव्याः ॥९८–१०२॥

उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

नमः पदस्य नमस्कारार्थे, द्योतकत्वेन धात्वर्थ उभयोरन्वयलाभेन द्वितीयाचतुर्थ्योः प्रसक्तिर्बोध्या । यदि च स्वप्रयोज्यस्ववाच्यार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वसम्बन्धेन नमः पदविशिष्टाचतुर्थीत्यर्थः, तदा नमस्करोति देवानित्यादौ नमस्कारार्थनिष्ठविषयता कृधातुप्रयोज्येति न चतुर्थीप्राप्तिरत आह—*नमस्यतीति* ।

कारकविभक्तित्वञ्च क्रियानिष्ठविशेष्यतानिरूपितक्रियाकारकभावसम्बन्धावच्छिन्नप्रकारताप्रयोजकविभक्तित्वम् । वस्तुतस्तु प्रधाननिमित्तकत्वेन कारकविभक्तीनां बलवत्त्वम् । तन्मूलकोऽयं न्यायः। नमस्करोतीत्यत्र व्यापारस्य प्रधानतया तदपेक्षद्वितीयाया बलवत्त्वम् ।

अत्र प्राधान्यं–जन्यत्वेनाप्रतीयमानत्वम् । तेन नमस्क्रियन्ते इत्यत्र बोधस्य शाब्दबोधीयप्राधान्येऽपि न दोषः । "तत्र च दीयते" (पा० सू० ५ । १ । ९६) इति सूत्रस्थभाष्यविरोधस्तु न, तस्य भाष्यस्य "तस्मिन्निति" ( पा० सू० १ । १ । ६६ ) परिभाषयाऽसति बाधकेऽस्मिन् शास्त्रेऽधिकरणसप्तम्येव परत्वादित्यर्थकत्वात् ॥ इति ॥ १०३ ॥

अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०४ ॥

यत्किञ्चित् प्रयोगविशिष्टे शास्त्रेऽन्त्यसदेशस्येत्युपस्थितिः । वै० स्वपर्याप्तोद्देश्यताकत्व, स्वान्तोद्देश्यकविकाराप्रयोजकत्व–स्वनिरूपितावयवत्वविशिष्ट—अन्त्यसदेशानन्त्यसदेशोभयवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयता–प्रयोजकत्वैतत्त्रितयसम्बन्धेन । अन्त्यसदेशत्वञ्च स्वप्रागभावाधिकरणक्षणवृत्तित्व–विजातीयवर्णप्रागभावाधिकरणक्षणावृत्तित्वोभयसंम्बन्धेनान्त्यवर्णविशिष्टत्वम् ।

परे तु इयं परिभाषा न भाष्यसम्मता–"नैतस्याः परिभा-

षायाः प्रयोजनानि" इतिभाष्यात् । नागेशव्याख्यानन्तु न युक्तम् अक्षरस्वारस्य भङ्गापत्तेः । 'अनस्तक्षण' इत्यत्र पूर्वाकारस्य लोपस्तु न तस्य निर्दिश्यमानावयवत्वाभावात्(१)। 'अदमुयङ्' इत्यादीनामनभिधानमेवेत्याहुरिति ॥ १०४ ॥

नानार्थकेऽलोन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥

प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ॥ १०६ ॥

अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥१०७॥

व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥१०८॥

विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०९ ॥

सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥

प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम्॥११२॥

श्रुतानुमितयोः श्रुतसम्बन्धो बलवान् ॥ ११३ ॥

एता अपि तत्रैव द्रष्टव्याः ॥१०५-११३॥

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ११४ ॥

प्रतिपदोक्तत्वञ्च-यदर्थे विशेषणतया प्रतिपदोक्तत्वं विवक्षितं तद्विशिष्टत्वम् । वै० स्ववृत्त्यानुपूर्व्यवच्छिन्नविधेयताश्रयत्व-स्वार्थान्वय्यर्थकपदवृत्त्यानुपूर्वीमत्पदप्रयोज्योद्देश्यतानिरूपितविधेयतानाश्रयत्वैतदन्यतरसम्बन्धेन ॥ ११४ ॥

गामादाग्रहणेष्वविशेषः ॥ ११५ ॥

प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११६ ॥

क्वचित्समुदायेऽपि ॥ ११७ ॥

अभेदका गुणाः ॥ ११८ ॥

बाधकान्येव निपातनानि ॥ ११९ ॥

अमू परिभाषा वैशिष्ट्याभावान्न व्याख्याताः॥ ११५।११६।११७। ११८।११९॥

पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२० ॥

स्वविशिष्टं स्वतो न भिन्नमिति लक्ष्येलक्षणमित्यस्यार्थः। वै०स्वाघट-

(१) षष्ठीप्रकृतिप्रयोज्यशाब्दबोधीयप्रकारताश्रयत्वं तत्त्वम् ।

कत्व,—स्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वोभयसम्बन्धेन,—स्ववि-शिष्टाघटितत्वसम्बन्धेन। स्वघटकोद्देश्यकप्राप्तिविशिष्टप्राप्तिविषयाघटि-तत्वरूपद्वितीयसम्बन्धोऽपि देयः। वै० स्वभिन्नत्व—स्वसमानकालिक-त्व—स्वनिरूपकशास्त्रनिरूपितत्वैतत्त्रितयसम्बन्धेन। तेन "न सम्प्रसारणे" ( पा० सू० ६।१।३७ ) इत्यस्य न वैयर्थ्यम्॥ १२० ॥

निषेधाश्च बलीयांसः ॥ १२१ ॥

अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति ॥ १२२ ॥

योगविभागादिष्टसिद्धिः ॥ १२३ ॥

पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ १२४ ॥

ज्ञापकसिद्धं न सर्वत्र ॥ १२५ ॥

पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥

एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भवति ॥ १२७ ॥

सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत् ॥ १२८ ॥

क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२९ ॥

औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥

श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणञ्चैव पञ्चैतानि न यङ्लुकि ॥ १३१ ॥

पदगौरवाद्योगविभागो गरीयान् ॥ १३२ ॥

अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥ १३३ ॥

अर्धमात्रालाघवेनेति हेतौ तृतीया। इतिशम् ॥

इति श्रीसर्वतन्त्रस्वतन्त्राप्रतिमप्रतिभपूज्यपादतत्रभवच्छ्री१०८ मत्काशीनाथशास्त्रिशर्मतनूजन्म—पण्डितवरव्याकरणाचार्यश्रीरघुनाथशास्त्रिनिर्मिता परिभाषेन्दुशेखरलघुजूटिका समाप्तिमफाणीत् ॥

श्रीशिवार्पणमस्तु ॥

यदत्र स्खलितं किञ्चित्प्रमादेन भ्रमेण वा ।
मान्या मयि दयावन्तः सन्तः संशोधयन्तु तत् ॥ इतिशिवम् ॥

## हरिदाससंस्कृतग्रन्थमालासमाख्य–

# काशीसंस्कृतसीरीज़ पुस्तकमालायाः ।

अस्यां काशी—संस्कृतग्रन्थमालायां विभागशः प्रकाशिता भवति । एतस्यां प्राचीना नवीनाश्च दुर्लभाः सुलभाश्चात्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परं तु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयांनां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

| तत्र मुद्रितग्रन्थनामानि । | | रु० | आ० | पा० |
|---|---|---|---|---|
| १ नलपाकः नलविरचितः । संपूर्णः | ( पाकशास्त्रम् १ ) | १ | ८ | ० |
| २ संक्षेपशारीरकम् । रामतीर्थस्वामिकृताऽन्वयार्थबोधिनीटीकासहितम् । | ( वेदान्तः १ ) | १० | ० | ० |
| ३ वैशेषिकदर्शनम् । सटीक–प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् । | ( वैशेषिक १ ) | ३ | ८ | ० |
| ४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधराद्याचार्य कृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । | ( वैदिक १ ) | ० | ६ | ० |
| ५ लघुशब्देन्दुशेखरः सटीकः तत्पुरुषादिसमाप्ति पर्यन्तः | ( व्याकरण १ ) | १० | ० | ० |
| ६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपण" दिनकरीय महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रीव्याख्या सहिता । | ( न्याय १ ) | १० | ० | ० |
| ७ पञ्चीकरणम् । वार्तिकाभरणालङ्कृत वार्तिकटीकयातत्त्वचन्द्रिकासमवेत विवरणेन च समन्वितम् । | ( वेदान्त २ ) | ० | ८ | ० |
| ८ अलङ्कारप्रदीपः पण्डितवर विश्वेश्वर पाण्डेयनिर्मितः । | ( काव्य १ ) | ० | ८ | ० |
| ९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । | ( कामशास्त्र १ ) | ० | १२ | ० |
| १० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । | ( ज्योतिष१ ) | २ | ० | ० |
| ११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीय-श्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । | ( कर्मकाण्डम् १ ) | १ | ० | ० |
| १२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । | ( वैदिक २ ) | १ | ४ | ० |
| १३ श्रीमत्सनत्सुजातीयम्–श्रीमच्छङ्कर-भगवत्पादविरचित भाष्येण–नीलकण्ठीव्याख्यया च संवलितम् । | ( वेदान्त ३ ) | १ | ४ | ० |
| १४ कुमारसंभवं महाकाव्यम् । महाकवि श्रीकालिदास वि० । सञ्जीवनी–शिशुहितैषिणी टीकाद्वयोपेतम सम्पूर्णम् । | ( काव्य २ ) | २ | ० | ० |
| १५ श्रुतबोधश्छन्दोग्रन्थः । आनन्दवर्द्धिनीतात्पर्यप्रकाशाख्यसंस्कृत–भाषाटीका सहित | | ० | ६ | ० |
| १६ कारिकावली व्याख्या मुक्तावली–न्यायचन्द्रिका टीका सहित सटीप्पण | (न्याय २) | १ | ० | ० |
| १७ पारस्करगृह्यसूत्रं हरिहरभाष्य-गदाधरभाष्यद्वयसहितम् । | ( कर्मकाण्डं २ ) | २ | ४ | ० |
| १८ संक्षेपशारीरकम्- मधुसूदनीटीका भाग १ | ( वेदान्त ४ ) | ९ | ० | ० |
| १९ लघुजूटिका-परि० शेन्दुशेखरपरिष्कार सहित | ( व्याकरण २ ) | ० | ८ | ० |

**पत्रादिप्रेषणस्थानम्** }

**हरिदासगुप्त एण्ड सन्स,**
मालिक, चौखम्बा संस्कृत सीरीज़ आफिस,
विद्याविलास प्रेस, गोपालमंदिरलेन,
बनारस सिटी ।